*Wonder what her smile meant.*
*I'd walked up to her*
*and offered my pack*
*of fresh mint*
*bubble gum.*
*She popped*
*one in.*
*And she smiled .....*




*Was it my charm, or was it my bubble gum?*




Fixy Foxy
Spearmint Bubble Gum

Dattaram NP 2E/86

# परेङ्गितज्ञानम्

उदीरितोऽर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति देशिताः ।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ।।

अस्य शतकस्य कश्चन कालः, यत्र सर्. एं. विश्वेश्वरय्यमहोदयः मुख्यः अभियन्ता (Chief Engineer) आसीत्। कदाचित् कश्चन कर्मकरः आगत्य विश्वेश्वरय्यमहोदयं पृष्टवान् - "श्रीमन्! वयं तु अहोरात्रं कार्यं कुर्मः। किन्तु वेतनम् अल्पम्। भवतः तु कार्यावधिः अल्पः। तत्र श्रमः अपि न्यूनः। किन्तु वेतनम् अधिकम्। एतत् कथं युज्यते?" इति। तदा विश्वेश्वरय्यः जम्बीरफलद्वयम् आनायितवान्। कर्मकरम् आदिष्टवान् च - "एकस्य उपरि अपरं स्थापयतु" इति। बहुधा प्रयत्ने कृते अपि कर्मकरः साफल्यं न प्राप्तवान्। तदा विश्वेश्वरय्यः तत् फलद्वयं स्वीकृतवान्। एकस्य उपरि स्वकीयम् अङ्गुलीयकं संस्थाप्य तदुपरि अपरं फलं स्थापितवान्। कर्मकरः आश्चर्येण पश्यन् आसीत्। विश्वेश्वरय्यः तम् उक्तवान् - "पश्यतु, एतदर्थम् एव अस्मादृशानां वेतनम् अधिकम्" इति।

एषा एव बुद्धिमत्ता इति उच्यते लोके।

सामान्ये कार्ये (श्रममात्रेण साध्ये शारीरककार्ये) बुद्धेः पात्रत्वम् अल्पम्। एतादृशं कार्यं मानवः किं, पशवः अपि कर्तुम् अर्हन्ति। अश्वगजादयः एव अत्र प्रमाणम्।

कौशलपूर्वकं कार्यकरणे बुद्धिमत्ता अपेक्षिता। लोके एषा सर्वैः आद्रियते च। किन्तु कवेः अभिप्रायानुगुणं बुद्धिः नाम अन्या एव। कविः वदति - "अन्येषाम् इङ्गितं कथनात् पूर्वम् एव यतः ज्ञायते सा एव बुद्धिः" इति।

लोके वयं कदाचित् तादृशान् पश्यामः, ये च मुखावलोकनमात्रेण अन्यस्य भावं ज्ञात्वा तदनुगुणम् आचरन्ति। सूक्ष्मपरिशीलनेन निरन्तरचिन्तनेन च वयम् अपि एतां बुद्धिम् अस्माकं प्रवृत्तौ आनेतुं शक्नुमः।

# भूतकाले कृदन्तरूपाणि

शिष्यः - श्रीमन्! भवान् सर्वाणि क्रियापदरूपाणि जानन् अपि भूतकाले 'गतवान्', 'कृतवान्' इत्यादिरूपेण कृदन्तानां प्रयोगं करोति किल? तदपि साग्रहं सर्वदा च!

आचार्यः - तत्र कः दोषः इति भवतः अभिप्रायः?

शि - दोषः इति न। जिज्ञासुः अहं पृच्छामि - "एवं प्रयोगे किं कारणम्" इति।

आ - सरलतादृष्टिः एव अत्र कारणम्।

शि - मृत्पिण्डबुद्धेः मम एतावता अपि .....।

आ - समग्रं विवरणं खलु इच्छति भवान्? अस्तु तावत्। भूतकाले लिट्, लङ्, लुङ् इति लकारत्रयं विहितम् अस्ति। क्रमेण उदाहरणानि–

बभूव (लिट्)
अभवत् (लङ्)
अभूत् (लुङ्).

एतेषु लिटः (बभूव) प्रयोगः व्यवहारे विरलः। इतररूपाणां प्रयोगे क्लेशः।

शि - तत् कथम्?

आ - लुङि (अभूत्) लङि (अभवत्) च धातोः पूर्वम् अकारः (अडागमः) श्रूयते। किन्तु तस्य योजने सामान्यतः सर्वैः दोषः क्रियते। विशेषतः उपसर्गसहितधातूनां प्रयोगे। स्वीकरोति, प्रकटयति, प्रविशति इत्यादीनां भूतकालरूपाणि वदतु।

शि - स्व्यकरोत् (स्वी+अकरोत्) प्राकटयत्, (प्र+अकटयत्) प्राविशत् (प्र+अविशत्)।

आ - समीचीनतया उक्तं भवता। सामान्यतः बहवः अस्वीकरोत्, अप्रकटयत्, अप्रविशत् इति वदन्ति।

शि - उपसर्गस्य अनन्तरं धातोः पूर्वम् अकारे योजनीये, उपसर्गतः पूर्वं योजयन्ति। तदा एषः दोषः सम्भवति। एवं किल?

आ - आम्, एतावदेव न, भूतकालक्रियापदरूपस्य वर्तमानरूपस्य च साम्यं न भवति। यथा - स्वीकरोति - स्व्यकरोत्, प्रविशति - प्राविशत्। अतः अर्थबोधे क्लेशः। भूतकृदन्तरूप-वर्तमानरूपयोः तु साम्यम्। यथा - स्वीकरोति - स्वीकृतवान्। प्रकटयति - प्रकटितवान्।

शि - प्रयोगसौलभ्यम् अस्ति इति तु सत्यम् एव। किन्तु क्रियापदरूपस्य तु लिङ्गभेदः नास्ति। (यथा सः/ सा/ तत् - अगच्छत्) कृदन्तरूपस्य तु लिङ्गभेदः अस्ति। (यथा - सः गतवान्, सा गतवती, तत् गतवत्) एवं प्रयोगसौलभ्यम् अङ्गीकुर्वद्भिः लिङ्गभेदभारः अपि अङ्गीकरणीयः आपतितः।

आ - यद्यपि एतत् सत्यम् एव। किन्तु अत्र अपरः लाभः अस्ति यत् पुरुषभेदचिन्ता नास्ति। यथा-

सः/ रामः }
त्वम् } गतवान्
अहम् }

क्रियापदरूपे तु पुरुषभेदरूपः क्लेशः आसीत् एव। यथा - सः/रामः - अगच्छत्, त्वम् - अगच्छः, अहम् - अगच्छम्।

शि - एवं तर्हि लिङ्गभेदस्य आधिक्ये अपि पुरुषभेदः नास्तीति लाभः अपि अस्ति।

आ - आम्! अन्यच्च सरलतादृष्ट्या युष्मच्छब्दस्य स्थाने भवच्छब्दस्य प्रयोगः क्रियते। भवच्छब्दरूपस्य कृदन्तरूपस्य च साम्यम् अपि अस्ति। यथा - भवान्-गतवान्। भवती-गतवती। प्रान्तीयभाषासु क्रियापदरूपे लिङ्गभेदः अस्ति एव। अतः छात्राः सुलभतया कृदन्तरूपाणि अनुसरन्ति। एवं च क्रियापदकाठिन्यं सर्वैः संस्कृतज्ञैः यत् अनुभूयते तत् अत्र परिहृतं भवति।

अपरं च भूतसामान्ये कोऽपि लकारः नास्ति। सर्वेऽपि सामान्यतः भूतकालार्थे लङ्लकारस्य (अभवत्) प्रयोगं कुर्वन्ति। कालविशेषे उक्तस्य लकारस्य भूतसामान्ये प्रयोगः न तथा औचित्यम् आवहति किल। कृदन्तरूपं तु भूतसामान्ये उक्तम् अस्ति। अतः भूतकाले कृदन्तरूपस्य प्रयोगः कृतः चेत् दोषस्य न अवकाशः।

शि - इदानीं ज्ञाता कृदन्तरूपप्रयोगे भवता क्रियमाणस्य आग्रहस्य पृष्ठभूमिः।



# चन्दमामा

अगस्त्-१९८६

*

## अन्तरङ्गम्



*

प्रतिकृतिमूल्यं रू. २.५०
वार्षिकं ग्राहकशुल्कं रू. ३०.००

# चन्दमामा

संस्थापकः– "चक्रपाणिः"　　सञ्चालकः– "नागिरेड्डी"

प्राथमिकस्तरे प्रौढस्तरे वा न काऽपि भाषा अन्यभाषामाध्यमेन पाठ्यते, ऋते संस्कृतात्। संस्कृतं केवलम् इतरभाषया पाठ्यते। स्नातकोत्तरपदवीस्तरे अपि एषा एव परिस्थितिः! अतः पदव्यनन्तरम् अपि कश्चित् दश वाक्यानि निरर्गलं वक्तुं न शक्नोति। साम्प्रदायिकपद्धत्यां कुत्रचित् संस्कृतमाध्यमेन पाठ्यते, किन्तु तत्रापि विशेषतः सम्भाषण-असामर्थ्यं परिदृश्यते। अतः संस्कृतज्ञेषु विद्यमानस्य प्रधानस्य दोषस्य निवारणे संस्कृतमाध्यमेन पाठनम् एव सिद्धौषधम्।

एतद्दृष्ट्या कैश्चित् वा संस्कृतमाध्यमेन पाठनस्य प्रयोगः आरम्भणीयः। अल्पे एव काले सर्वत्र संस्कृतमाध्यमेन संस्कृतस्य पाठनं सहजम् इति भावना यथा उत्पद्येत तथा व्यवस्थितप्रयत्नः करणीयः।

शैक्षणिकवर्षारम्भस्य एषः कालः एतादृशप्रयोगार्थम् उचितः कालः। छात्राः अपि सहजतया उत्साहिनः भवन्ति। पाठनभारः अपि न तथा अधिकः भवति तदा। अतः अये संस्कृतमातृसेवक! संस्कृताध्यापकबन्धो! नूतनप्रयोगार्थं युक्तः कालोऽयं समुपागतः सखे!

सम्पुटः - ३　　अगस्ट् - ८६　　सञ्चिका - ५

प्रतिकृतिमूल्यम् - रू. २.५० वार्षिकं ग्राहकशुल्कम् - रू. ३०.००



# प्रतीकेषु संस्कृतवाक्यानि

(प्रतीकेषु उपयुक्तानि संस्कृतवाक्यानि कानिचन अत्र सङ्गृहीतानि। एकस्मिन् पार्श्वे वाक्यानि सन्ति। अपरस्मिन् पार्श्वे संस्थानां नामानि सन्ति, याभिः तानि वाक्यानि स्वप्रतीके उपयुक्तानि। संस्थां वाक्यं च परस्परं योजयन्तु)

| | | | |
|---|---|---|---|
| I | सत्यमेव जयते | १ | राष्ट्रिय संस्कृत सस्थनम् |
| II | नभःस्पृशं दीप्तम् | २ | जीवविमासंस्था |
| III | बहुजनहिताय | ३ | रामकृष्णाश्रमः |
| IV | योऽनूचानः स नो महान् | ४ | भारतीयवायुदलम् |
| V | तमसो मा ज्योतिर्गमय | ५ | भारतीयजलसेना |
| VI | तन्नो हंसः प्रयोदयात् | ६ | भारतसर्वकारः |
| VII | योगक्षेमं वहाम्यहम् | ७ | विश्व हिन्दु परिषद् |
| VIII | शं नो वरुणः | ८ | मैसूरु विश्वविद्यालयः |
| IX | धर्मो रक्षति रक्षितः | ९ | आकाशवाणी |
| X | न हि ज्ञानेन सदृशम् | १० | चौखाम्बा प्रकाशनम् |

**उत्तराणि**

I-६, II-४, III-९, IV-१, V-१०, VI-३, VII-२, VIII-५, IX-७, X-८.

## रसवार्ताः



### फ्लोरिडानगरे ताजमहल्

डोनाल्ड् सोल्डिनि नामकः अमेरिकादेशीयः फ्लोरिडानगरे ताजमहल्सदृशं कलात्मकं भवनं निर्मातुम् उद्युक्तः अस्ति। इदानीं तु प्रतिवर्षं केचन एव अमेरिकादेशीयाः अस्माकं देशे स्थितं ताजमहल्भवनं द्रष्टुं शक्नुवन्ति। 'यदि फ्लोरिडानगरे एव एतद्भवनं स्यात् तर्हि लक्षशः जनाः एतत् द्रष्टुं शक्नुवन्ति' इति चिन्तयन् सः अधिकव्ययेन अपि एतस्य भवनस्य निर्माणे उद्युक्तः अस्ति।

### पिरमिड्कालीनः वायुः



सामान्यतः ४००० वर्षेभ्यः पूर्वं निर्मितस्य चियोन्स् पिरमिड्-भवनस्य अधोभागे स्थितं वायुं कूपिकासु सङ्गृह्य तस्य विश्लेषणार्थं विज्ञानिनः प्रयतमानाः सन्ति। 'एतेन प्रयोगेण भूमेः अन्तर्भागे स्थितस्य वातावरणस्य परिचयः भवति, तथैव प्राचीनाः इजिप्टजनाः अमूल्यानि वस्त्रादीनि सहस्रशः वर्षाणि कथं सुरक्षितं स्थापितवन्तः इत्यपि ज्ञायते' इति ते विज्ञानिनः वदन्ति।



### स्त्रीणां कृते केवलम्

सौदी अरेबियादेशे तादृशः कश्चन यन्त्रागारः स्थापितः अस्ति यत्र च केवलं स्त्रीणाम् एव अवकाशः। तस्मिन् देशे 'स्त्रियः पुरुषाः च सम्भूय कार्यं न कुर्युः' इति शासनेन नियमः कृतः अस्ति। अतः एतादृशः यन्त्रागारः तत्र स्थापितः।

# भवन्तः जानन्ति वा?

१. जगति एव अतिप्राचीनं राजधानीनगरं किम्?

२. इदानीं रशियादेशस्य राजधानी मास्को। इतःपूर्वं तस्य देशस्य राजधानी किम् आसीत्?

३. नार्वेदेशस्य राजधान्याः ओस्लोनगरस्य प्राचीनं नाम किम्?

४. आस्ट्रेलियादेशस्य इदानीन्तनराजधानी कान्बेर्रा। पूर्वं तस्य देशस्य राजधानी किम् आसीत्?

५. इजिप्टदेशस्य राजधान्याः कैरोनगरस्य अन्यत् नाम किम्?

(उत्तराणि ६५तमे पृष्ठे)

# कार्तवीर्यार्जुनः

नर्मदानद्याः तीरे माहिष्मतीनगरं राजधानीं परिकल्प्य कार्तवीर्यार्जुनः शासनं कुर्वन् आसीत्। 'अपेक्षितानि सर्वाणि कार्याणि मया स्वहस्तेन एव करणीयानि' इति इच्छा कदाचित् उत्पन्ना तस्य मनसि। अतः सः दत्तात्रेयं भक्त्या पूजयन् सहस्रं हस्तान् वररूपेण प्राप्तवान्।

सहस्रहस्तानां प्राप्त्या कार्तवीर्यार्जुनस्य अहङ्कारः प्रवृद्धः अभवत्। एकदा सः नदीस्नानं कुर्वन् नदीप्रवाहं स्वहस्तैः निरोद्धुम् इच्छन् सहस्रं हस्तान् सेतुरूपेण स्थापितवान्। एतेन नदीप्रवाहः उद्गतः। नदीतीरे स्थिता रावणसेना जले निमग्ना च। तदा कुपितः रावणः युद्धार्थम् आगत्य पराजयं प्राप्तवान्। एतया घटनया कार्तवीर्यार्जुनस्य अहङ्कारः पराकाष्ठतां प्राप्ता।

एकदा अग्निदेवस्य प्रार्थनाम् अङ्गीकृत्य कार्तवीर्यार्जुनः गिरिनगरस्य अरण्यं दग्धुम् अग्निदेवाय अनुमतिं दत्तवान्। अरण्यदाहसमये अपवमुनेः आश्रमः अपि दग्धः। कुपितः अपवः - "सहस्रहस्ताः सन्ति इति अहङ्कारेण उन्मत्तः भवान्। अचिरात् एव भवतः हस्ताः नष्टाः भविष्यन्ति" इति शापं दत्तवान्।

केषाञ्चित् दिनानाम् अनन्तरं कार्तवीर्यार्जुनः जमदग्नेः आश्रमे स्थितां कामधेनुम् अपहर्तुं प्रयत्नं कृतवान्। विफलः सः जमदग्निं मारितवान् एव। आश्रमम् आगतः जमदग्निपुत्रः परशुरामः एतम् अव्यवहारम् असहमानः कार्तवीर्यार्जुनस्य सहस्रं हस्तान् अपि छेदितवान्, तं हतवान् च।





# पण्डितः विशारदः

पूर्वं चण्डीपुरे जगन्नाथः नाम कश्चन निवसति स्म। तस्य तिस्रः पुत्र्यः सञ्जाताः। चतुर्थतया यदा पुत्रः जातः तदा गृहसदस्याः सर्वे अतीव सन्तुष्टाः। सर्वे तं सर्वदा लालयन्ति स्म। मातापितरौ तु तं महत्या प्रीत्या लालितवन्तौ। विशारदः इति तस्य नाम निश्चितम्।

विशारदस्य रोदनं, हासः, दुष्टचेष्टाः इत्यादयः सर्वे गृहसदस्यानां प्रियकराः एव। ते अहमहमिकया शिशुं लालयन्ति स्म। एतस्य परिणामतः सः बालः विद्याभ्यासे असमर्थः जातः। विशारदः पञ्चदशवर्षीयः यावत् जातः ततः पूर्वम् एव तस्य भगिनीत्रयस्य विवाहः अपि सम्पन्नः।

इदानीं विशारदस्य मातापितरौ वार्धक्ये स्तः। तयोः एका एव चिन्ता - 'अग्रे विशारदस्य का गतिः भवेत्' इति। विद्यायां, करकुशलकर्मसु, कृषिवृत्तौ वा सः न निपुणः। भविष्यतः विषये तस्य न काऽपि चिन्ता। भोजनम्, अटनं, निद्रा इति एतावदेव तस्य वृत्तिः।

एवं स्थिते कदाचित् कश्चन संन्यासी जगन्नाथस्य गृहस्य पुरतः स्थित्वा - "भोः मातापितरः! भिक्षया अनुगृह्णन्तु। संन्यासी अहं सुदूरात् उपस्थितः अस्मि" इति उक्तवान्।

तत् श्रुत्वा जगन्नाथः त्वरया बहिः आगत्य संन्यासिनं दृष्ट्वा उक्तवान् - "महात्मन्! भवतः मुखे दृश्यमानेन तेजसा आकृष्टाः वयम्। अन्तः आगच्छतु। भिक्षास्वीकरणेन अनुग्राह्याः वयम्। भवतः पादधूल्या परिशुद्धं भवतु एतद्गृहम्" इति।

संन्यासी तद्दिने तत्रैव स्थितवान्। जगन्नाथेन व्यवस्थापितेन भोजनेन सन्तुष्टः संन्यासी उक्तवान् - "भवताम् आतिथ्येन सन्तृप्तः अस्मि अहम्। भवन्तः भवतां समस्या यदि काऽपि स्यात् तर्हि वदन्तु। यदि शक्यं परिहरिष्यामि" इति।

"माणवकः"



जगन्नाथः संन्यासिने पुत्रस्य विशारदस्य पीरस्थितिं निवेद्य उक्तवान् - "कियत्कालं वयं जीवेम इति न जानीमः। अस्माकम् अनुपस्थितौ एषः पुत्रः कथं जीवेत् इत्येव महती समस्या। एतत् स्मरन्तः वयं निद्रां न अनुभवामः। एकलः पुत्रः। किन्तु तस्य एतादृशी परिस्थितिः! व्यवहारं किमपि न जानाति। एषा एव अस्माकं समस्या" इति।

संन्यासी विशारदं स्वसमीपम् आहूय उपवेशितवान्। तस्य दक्षिणहस्तस्य रेखाः सुपरीक्ष्य जगन्नाथम् उक्तवान् - "भोः, भवता पुत्रविषये दुःखम् अनुभोक्तव्यं नास्ति। विशारदः राजाश्रयं प्राप्स्यति। सवैभवं जीविष्यति। एतस्य जीवनौन्नत्यं भवान् स्वनेत्राभ्यां द्रक्ष्यति। अतः चिन्तां त्यक्त्वा सन्तोषेण जीवतु" इति।

"एतस्य तु विद्यायाम् एव आसक्तिः नास्ति। कुत्रचित् प्रावीण्यं प्राप्नुयात् इत्यपि न विश्वासः मम। आहारादिविषये अपि एतस्य न स्वयंप्रवृत्तिः। एतादृशः कथं वा राजाश्रयं प्राप्नुयात्? भवतः वचनं कथं विश्वसेयम्?" इति सन्देहं प्रकटितवान् जगन्नाथः।

"भवतः वचनं सत्यम् एव। एषः महापाण्डित्यं न प्राप्नुयात्। किन्तु राजाश्रयं प्राप्स्यति इति तु निश्चितम्। दैवानुग्रहः मानवप्रयत्नम् अपेक्षते। अतः एतस्मै संस्कृतं पाठयतु। कालान्तरे प्रयत्नः फलिष्यति एव। हस्तरेखाफलं कदापि असत्यं न भविष्यति" इति उक्तवान् संन्यासी।

"अक्षराभ्यासः एव येन न कृतः सः सस्कृतभाषां कथं वा जानीयात्? संस्कृतं तु अपरिचिता नूतना भाषा। तत्र एतस्य प्रवृत्तिः भवेत् वा?" इति आतङ्कपूर्णस्वरेण पृष्टवान् जगन्नाथः।

विशारदः एतत्सर्वं शृण्वन् आसीत्। सः मध्ये उक्तवान् - "तात! महात्मानः असत्यं न वदन्ति। यदि राजाश्रयः प्राप्येत तर्हि अहम् अवश्यं संस्कृतं पठिष्यामि। माम् उत्तमं गुरुकुलं प्रति प्रेषयतु। श्रद्धया सर्वं पठिष्यामि" इति।

"पश्यतु। इदानीम् एव संस्कृतभाषायाः पठने भवतः पुत्रस्य आसक्तिः उत्पन्ना। इतःपरम् अपि सन्देहः मास्तु। हस्तरेखाः सदा सत्यम् एव सूचयन्ति। इदानीं युक्तः

कालः प्राप्तः अस्ति" इति उक्त्वा संन्यासी ततः गतवान्।

जगन्नाथः संस्कृतभाषां किञ्चित् जानाति। अतः सः तद्दिने एव पुत्रं संस्कृतं पाठयितुम् आरम्भं कृतवान्। किन्तु मासात्मकप्रयत्नेन अपि विशारदः कानिचन पदानि अपि न ज्ञातवान्।

एतेन तीव्रं दुःखितः जगन्नाथः कदाचित् पत्नीम् उक्तवान् - "मम प्रयत्नः विफलः। पुत्रस्य पाठने अहम् असमर्थः जातः। एतादृशः कथं वा संस्कृतज्ञः भवेत् इति अहं न जानामि। ब्रह्मा एतस्य ललाटे किं वा लिखितवान् स्यात्? एतस्य जन्म किमर्थं वा जातं स्यात्? विचित्रम् एतत्!" इति।

"भो! भवान् कदाचित् सामान्यम् अपि विषयं माम् अवगमयितुं न शक्नोति। एवं स्थिते विशारदं कथं वा संस्कृतं समर्थतया पाठयेत्? यत्र व्यामोहः अधिकः तत्र पाठनं सम्यक् न भविष्यति। अतः एतं विद्याभ्यासार्थं गुरुकुलं प्रेषयतु" इति सूचितवती पत्नी।

"पत्न्याः वचनेषु सत्यम् अस्ति" इति ज्ञातवान् जगन्नाथः। किन्तु तस्मिन् ग्रामे संस्कृतं पाठयितुं समर्थः कोऽपि न आसीत्।

पार्श्वग्रामे देवीदासः नाम कश्चन संस्कृतपण्डितः आसीत्। पाठने सः सिद्धहस्तः। तत्प्रदेशे तस्य कीर्तिः प्रसृता आसीत्। जगन्नाथः पुत्रम् एतस्य देवीदासस्य गृहं नीतवान्। 'एतं पाठयतु' इति देवीदासं



प्रार्थितवान्।

तदा देवीदासः साभिमानम् उक्तवान् - "भोः, भाषाशिक्षणं नाम सा एका विशिष्टा कला। तत्रापि संस्कृतस्य पाठने विशेषकौशलम् अपेक्षितम्। भवान् चिन्तां न करोतु। वर्षपञ्चकाभ्यन्तरे एतं पण्डितं करिष्यामि। एषः शास्त्रे सिद्धहस्तः यथा स्यात् तथा करिष्यामि। एतस्य पाठनभारं मयि आरोप्य भवान् निश्चिन्ततया गृहं गन्तुम् अर्हति" इति।

"श्रीमन्! मम पुत्रः वस्तुतः अपि संस्कृतं पठितुं शक्नुयात् वा? ज्योतिषिकः कश्चित् उक्तवान् यत् एषः संस्कृतद्वारा राजाश्रयं प्राप्स्यति इति। एतस्य भाविजीवनम् संस्कृताध्ययनम् आधारीकृत्य अस्ति" इति उक्तवान् जगन्नाथः।



अङ्गीकृतं चेत् न केवलम् अपमाननम्, अपि तु जीवनवृत्तेः भङ्गः भविष्यति अपि।

अतः देवीदासः पञ्चवर्षाणि यावत् महता परिश्रमेण विशारदाय संस्कृतं पाठितवान्। पाठनसमाप्तेः अनन्तरं सः विशारदम् उक्तवान् - "भोः, भवतः विद्याभ्यासः समाप्तः। किन्तु भवान् आत्मनः योग्यतां जानाति एव। वादे जयं प्राप्तुं मार्गद्वयम् - एकं पाण्डित्यम्, अपरं च कठिनशैल्या सधैर्यं व्यवहारः। भवान् द्वितीयं मार्गम् अनुसरतु। सर्वत्र तर्कशैल्या व्यवहरतु। नामकथनम् अपि कठिनशैल्या एव भवतु" इति।

विशारदः आचार्यं सन्तोषेण नमस्कृत्य - "गुरुदेव! भवतः उपकारं कदापि न विस्मरामि। भवतः अनुग्रहेण प्रायः अहं राजाश्रयं प्राप्नुयाम् अपि। ज्योतिषिकस्य वचनम् अत्र प्रमाणम्। यदा अहं राजाश्रयं प्राप्स्यामि तदा गुरुदक्षिणारूपेण किमपि दातुम् इच्छामि। भवान् किम् इच्छति इति निर्दाक्षिण्यं वदतु" इति उक्तवान्।

"इतःपरं कोऽपि भवन्तं 'भवतः गुरुः कः?' इति पृच्छति चेत् कदापि मम नाम न वदतु। एषा एव भवता दातव्या गुरुदक्षिणा" इति उक्तवान् देवीदासः।

विशारदः एतत् अङ्गीकृत्य गृहं प्रत्यागतवान्। पुत्रस्य आगमनेन सन्तुष्टः जगन्नाथः तदीयं पाण्डित्यं परीक्षितुम् इष्टवान्। कांश्चन प्रश्नान् संस्कृतेन पृष्टवान्। यतः जगन्नाथः अपि संस्कृतं

"पुत्रस्य अध्ययनविषये चिन्ता एव मास्तु। एतत् मम दायित्वम्। मम समीपम् आगत्य कोऽपि तादृशः न प्रतिनिवृत्तः यश्च विद्यां न गृहीतवान् स्यात्। तादृशः यदि कश्चित् भवेत् तर्हि एतां पाठनप्रवृत्तिम् एव त्यजेयम्। विंशतिवर्षात्मके मम पाठनानुभवे अद्यावधि तादृशः कोऽपि न लब्धः। भवतः पुत्रः अपि नामानुगुणं संस्कृतभाषायां विशारदः भविष्यति" इति उक्तवान् देवीदासः।

देवीदासस्य वचनैः तृप्तः जगन्नाथः गृहं प्रतिनिवृत्तः। देवीदासः विशारदं पाठयितुम् आरब्धवान्। अल्पे एव काले तेन अपि मनसा अङ्गीकृतं यत् विशारदस्य पाठनं न तावत् सुलभम् इति। किन्तु पराजयम् अङ्गीकर्तुं सः न सिद्धः। यतः तथा

सामान्यतः जानाति किल?

तदा विशारदः पितरम् उक्तवान् - "तात! 'महापण्डितैः सह एव व्यवहारः करणीयः, न तु सामान्यैः सह' इति मम गुरोः आदेशः अस्ति। अतः अहम् भवता सह संस्कृतेन न व्यवहरामि। उत्तमे मुहूर्ते दिग्विजयार्थं गन्तुम् इच्छामि च। सर्वत्र सञ्चारं कृत्वा सर्वान् पण्डितान् जित्वा प्रत्यागमिष्यामि" इति।

तदा सन्तुष्टः जगन्नाथः उक्तवान् - "अवश्यं दिग्विजयार्थं गच्छतु। संन्यासिनः वचनं सत्यत्वेन प्रमाणीकरोतु" इति। उत्तमे मुहूर्ते पुत्रम् आशिषा अनुगृह्य प्रेषितवान् च।

मार्गे विशारदः स्वर्णपुरीं प्राप्तवान्। कस्यचित् सज्जनस्य गृहे स्थितवान् च। तस्य सज्जनस्य पत्नी चण्डी। 'मार्गे गच्छतः सर्वान् गृहम् आनयति किल।' इति विशारदस्य सम्मुखे एव सा पतिं तर्जितवती।

तदा विशारदः शान्ततया एव उक्तवान् - "अम्ब! अहं कश्चन संस्कृतपण्डितः, न तु सामान्यः कश्चित्। मम आगमनेन भवत्याः गृहं पवित्रं जातम्। अतः भवत्या सन्तोषः अनुभोक्तव्यः" इति।

तदा सा चण्डी स्त्री क्रोधेन - "किं तेन भवतः पाण्डित्येन? अहम् अपि संस्कृतविदुषी एव अस्मि" इति उक्तवती।

तदा विशारदः सन्तोषेण - "एवं वा? पाण्डित्येन सर्वान् जेतुम् एव गृहतः प्रस्थितः अहम्। आगच्छतु तावत्। वादं कुर्मः" इति





तर्कशैल्या वक्तुम् आरब्धवान्।

एतत् श्रुत्वा सा चण्डी भीता। यतः यद्यपि सा संस्कृतज्ञा, किन्तु तर्कशैल्यां तस्याः प्रभुत्वं नास्ति। यया शैल्या वादी वादम् उपस्थापयति तया एव शैल्या प्रतिवादिना उत्तरं दातव्यं किल? तथा वक्तुम् असमर्था सा आत्मनः पराजयम् अङ्गीकृत्य उक्तवती - "भोः श्रीमन्! भवतः पाण्डित्यं तु असदृशम्। भवता सह वादं कर्तुं मम सामर्थ्यं नास्ति। शास्त्रं तु बहुपूर्वम् अधीतम्। इदानीं तत्सर्वं कथं स्मरेयम्?" इति।

'विशारदस्य पुरतः वा एषा चण्डी पराजयम् अङ्गीकृत्य विनयेन व्यवहारं कृतवती किल?' इति सन्तोषम् अनुभूतवान् सः सज्जनः। सः पुरस्कारादिकं दत्त्वा विशारदम् उक्तवान् - "महोदय! स्वर्णपुर्यां कवितानन्दः नाम पण्डितः निवसति। 'यः मां पराजयते तस्मै सहस्रं सुवर्णनाणकानि दास्यामि' इति सः प्रकटितवान् अस्ति। अतः भवता अवश्यं सः द्रष्टव्यः" इति।

"एतत् एव किल मम कार्यम्" इति वदन् विशारदः अनन्तरदिने एव कवितानन्दस्य समीपं गतवान्। आत्मनः दिग्विजय यात्राविषयम् उक्त्वा संस्कृतेन वक्तुम् आरब्धवान्।

दौर्भाग्यवशात् कवितानन्दः अपि तर्कशैल्याम् अप्रवीणः। काव्यलेखने सामर्थ्यम् अस्तीत्यतः सः आत्मानं महाकविं मन्यते स्म। इदानीं यदा तर्कशैल्या वादः करणीयः आपतितः तदा सः वस्तुतः भीतः।

सः नम्रस्वरेण विशारदम् उक्तवान्, - "भोः, अहं यदि वादे पराजयं प्राप्नुयां तर्हि स्वर्णपुर्यां मम गौरवम् अपगच्छति। अतः आवयोः मध्ये स्पर्धा एव मास्तु। अहं भवते सहस्रं सुवर्णनाणकाणि ददामि। अस्माकं देशस्य राजा वराहसेनः महासंस्कृतपण्डितः। भवान् तस्य समीपं गत्वा भवतः पाण्डित्यं प्रदर्शयतु। तेन भवान् सुलभयता राजाश्रयं प्राप्तुं शक्नुयात्" इति।

'तथैव अस्तु' इति अङ्गीकृत्य विशारदः कवितानन्देन दत्तानि सहस्रं सुवर्णनाणकानि स्वीकृत्य राजधानीं प्रति प्रस्थितः। सप्तदिनानाम् अनन्तरं सः राजधानीं प्राप्तवान्।



राजधान्यां तेन ज्ञातं यत् राजास्थाने चतुरपादः नाम पण्डितः अस्ति, एतस्य अनुमतिं विना राजाश्रयः दुर्लभः इति। अतः विशारदः साक्षात् चतुरपादस्य गृहं गतवान्। आत्मनः संस्कृतपाण्डित्यं प्रदर्शितवान् च।

चतुरपादः विशारदम् आनादरेण उक्तवान् - "भोः, संस्कृतं मधुरा गम्भीरा च भाषा। भवतः उच्चारणे दोषाः सन्ति। शैली अपि कर्कशा। व्याकरणदोषाः अपि यथेष्ठं सन्ति। एतत्सर्वं श्रुत्वा महाराजः निश्चयेन असन्तुष्टः भविष्यति। मम वचनं शृणोतु। राजाश्रयप्राप्तिं विस्मरतु। ग्रामं गत्वा केनचित् उद्योगेन जीवतु। मार्गव्ययार्थं धनम् आवश्यकं चेत् अहम् एव ददामि" इति, शतं सुवर्णनाणकानि दत्तवान् च।

विशारदः चतुरपादस्य वचनेषु न विश्वसिति। सः कोपेन - "भवान् मम पाण्डित्यं दृष्ट्वा असूयां प्राप्तवान्। यदि अहं राजदर्शनं प्राप्नुयां तर्हि स्वस्थानस्य च्युतिः भवेत् इति हि भवान् चिन्तयति। अन्यस्य उत्कर्षं भवान् सोढुं न शक्नोति" इति चतुरपादं निन्दितवान्।

चतुरपादः तु शान्तस्वरेण - "भोः, अहं तु मम अनुभवानुसारं हितम् उपदिष्टवान्। भवान् माम् एव निन्दन् अस्ति। महाराजः एषु दिनेषु अस्वस्थः। तथापि अहं तस्य दर्शनं कारयामि। ललाटे यथा लिखितं तथा फलं प्राप्स्यति भवान्" इति उक्तवान्।

"राजदर्शनं यदि भवेत् तर्हि अहं निश्चयेन राजाश्रयं प्राप्स्यामि एव। यदि तथा भवेत् तर्हि भवतः उपकारं कृतज्ञतापूर्वकं स्मरामि अहम्" इति उक्तवान् विशारदः।

तद्दिने एव चतुरपादः महाराजस्य दर्शनं कारितवान्। "कः भवान्? किमर्थम् आगतवान्?" इति पृष्टवान् राजा वराहसेनः।

"मम नाम विशारदः इति। अहं कश्चन संस्कृतपण्डितः। पाण्डित्यप्रदर्शनेन राजाश्रयं प्राप्तुम् अत्र आगतवान् अस्मि" इति सधैर्यम् उक्तवान् विशारदः।

"भवान् तु अल्पवयस्कः इव दृश्यते। एवम् अल्पे वयसि कथं वा संस्कृते पाण्डित्यं प्राप्तवान् भवान्?" इति पृष्टवान् राजा।

"गुरोः अनुग्रहेण एतत् सिद्धम्। पञ्चवर्षाभ्यन्तरे गुरुः मां पण्डितं कृतवान्" इति वदन् विशारदः संस्कृतेन सम्भाषणम् आरब्धवान्।

यद्यपि महाराजः बहुभ्यः दिनेभ्यः अस्वस्थः। तथापि सः विशारदेन सह संस्कृतेन सम्भाषणं कृतवान्। विशारदस्य भाषाप्रयोगः तावद्विनोदजनिका आसीत् यत् महाराजः उदरोपपीडं हसितवान्। सम्भाषणमध्ये महाराजः हासं निगृह्णन् पृष्टवान् -"भोः! एतादृशस्य विशिष्टस्य भवतः गुरुः कः?" इति।

"एतत् तु रहस्यम्। 'तथा न वक्तव्यम्' इति गुरोः आदेशः अस्ति। 'गुरुदक्षिणारूपेण एतम् आदेशं पालयिष्यामि' इति मया प्रतिज्ञा कृता अस्ति अपि" इति उक्तवान् विशारदः।

राजा एतेन वचनेन पुनः अपि हसन् विशारदस्य पूर्वापरं सर्वं पृष्टवान्। तस्यां रात्रौ तत्रैव स्थातुं सूचितवान् अपि।

अनन्तरदिने आगतः राजवैद्यः महाराजं परीक्ष्य सन्तोषेण उक्तवान् - "महाराज! एकदिनाभ्यन्तरे एव भवतः स्वास्थ्ये परिवर्तनं दृश्यते। औषधानि फलितानि अभवन्" इति उक्तवान्।

"मनः एव सर्वस्य कारणं किल? अहं तु विविधसमस्याभिः ग्रस्तः आसम्। विशारदस्य संस्कृतसम्भाषणेन अहं यथेष्टं सन्तोषं प्राप्तवान्। अतः ह्यः सर्वाः चिन्ताः विस्मृताः अभवन्। मनः उल्लसितम् अभवत्। तेनैव कारणेन आरोग्ये परिवर्तनं दृश्यते प्रायः" इति उक्तवान् महाराजः।

विशारदः राजाश्रयं प्राप्तवान्। यदा विशारदः किमपि वदति तदा तस्य उच्चारणं भाषां च श्रुत्वा सर्वे हसन्तः सन्तोषम् अनुभवन्ति स्म। एवं जनाः यथा हसेयुः तथा करणम् एव तस्य कार्यम् आसीत्।

यदा विशारदस्य स्थानं सुभद्रम् अभवत् तदा सः ग्रामतः मातापितरौ आनीतवान्। पिता जगन्नाथः पुत्रस्य वैभवस्थितिं दृष्ट्वा सन्तोषम् अनुभवन् - "यथाकथम् अपि भवतु। संन्यासिना यत् उक्तं तत् सत्यम् एव अभवत्" इति उद्गारं प्रकटितवान्।






# २

(धवलगिरेः राजकुमारः चित्रसेनः मृगयार्थं गतः सन् गुहायां सिद्धयोगिनं दृष्टवान्। योगी तस्मै एकं कण्डोलं दत्तवान्। चित्रसेनः यदा कण्डोलस्य आवरणम् उद्घाटितवान् तदा एकं महाभवनम् उद्भूतम् अभवत्। उग्राक्षः नाम राक्षसः तत्र आगत्य चित्रसेनस्य ज्येष्ठपुत्रं दातुम् आज्ञापितवान्। चित्रसेनः एतत् अङ्गीकृतवान्। तदनन्तरम् .....)

चित्रसेनस्य अङ्गीकारानन्तरम् उग्राक्षः ततः प्रस्थाय वृक्षाणां समूहे अदृश्यः अभवत्। एवं राक्षसस्य निर्गमनानन्तरं "हन्त! देवो दयालुः" इति उद्गारं प्रकटयन् दीर्घं निःश्वसितवान् चित्रसेनः।

"किम् एतत् आश्चर्यम्! अविचिन्तित-घटनानां पङ्क्तिः। प्राणाः रक्षिताः इत्येव भाग्यम्। इतः गाढारण्यतः कथञ्चित् धवलगिरिः प्राप्तव्यः। धवलगिरौ मम माता पिता सहोदरादयः प्रायः गाढचिन्तायां मग्नाः भवेयुः।"

एवं चिन्तयन् चित्रसेनः उत्थाय पश्चिम-दिशम् अवलोकितवान्।तत्र अस्तं गच्छन्तं सूर्यं दृष्टवान् सः। मनोहरे अस्मिन् सन्ध्या-काले सूर्यस्य किरणाः एतस्य महाभवनस्य शिखरेषु पतिताः सन्तः प्रतिफलिताः आसन्। तेन समग्रः प्रदेशः अरुणकान्त्या व्याप्तः आसीत्। "एषः देवलोकः स्यात् वा?" इति भ्रान्तिः उत्पन्ना भवति स्म।

"अहो कीदृशं भव्यं सुन्दरं च भवनम्! किन्तु किं प्रयोजनम्! कः वा अत्र निवसेत्? वन्यमृगाः, उलूकाः, मधुमक्षिकाः केवलं




निवसेयुः" इति व्यथाम् अनुभवन् चित्रसेनः परितः दृष्टिं प्रसारयन् ततः प्रस्थितवान्। 'अरण्ये स्थितम् एतत् भवनं किं करणीयम्' इति सः न ज्ञातवान्।

यावत् सः पञ्चषाणि पदानि अग्रे स्थापितवान् तावता कानिचन वचनानि श्रुतानि - "महाराज! भवतः दर्शनेन वयं धन्याः। जयतु महाराजः" इति।

"कः महाराजः? घोरारण्ये कं वा आह्वयन्ति एते? कथम् अत्र उपस्थिताः? ध्वनिः तु राक्षसस्य इव नास्ति। वचनेषु विनयः विधेयता च दृश्यते" इति आलोचयन् चित्रसेनः पृष्ठतः परिवृत्य दृष्टवान्।

तत्र अमूल्यवस्त्रैः विभूषिताः सत्कुलोत्पन्नाः त्रयः ज्येष्ठाः दृष्टाः। अनतिदूरे केचन भटाः अपि हस्तौ बद्ध्वा स्थिताः आसन्। के एते? कुतः समागताः?

'अकस्मात् प्राप्तान् एतान् किं वदामि? किं वा पृच्छामि?' इति यावत् सः चिन्तयन् आसीत्, तावत् तेषु त्रिषु एकः अग्रे आगत्य नमस्कृत्य विनयेन उक्तवान् - "महाराज! भवतः प्रत्यागमनम् अदृष्ट्वा खिन्नाः वयं भवदर्थम् अरण्ये अटन्तः अन्ते अत्र आगतवन्तः। भगवतः कृपया अस्माकं श्रमः सफलतां गतः" इति।

"किम् अहं महाराजः?" इति आश्चर्येण पृष्टवान् चित्रसेनः।

तत् श्रुत्वा सः पुरुषः झटिति परिवृत्य - "सेनापते! अस्माकं महाराजः तावान् श्रान्तः यत् आत्मानं सः विस्मृतवान् अस्ति। शिबिकावाहाः कुत्र? शीघ्रं शिबिकाम् आनाययतु" इति उच्चैः उक्तवान्।

"शिबिकावाहाः समीपे एव वृक्षच्छायायां स्थिताः सन्ति। भवतः आज्ञां प्रतीक्षमाणाः सन्ति। तान् आह्वयामि तावत्" इति वदन् दश पदानि पृष्ठतः गतवान्। ततः - "भोः, महामन्त्रिणाम् आज्ञा! आगच्छन्तु अत्रSS!..." इति उच्चैः उक्तवान्।

तत्क्षणे एवं "वयम् उपस्थिताः" इति ध्वनिः श्रुतः। सुदृढाः चत्वारः पुरुषाः आगत्य चित्रसेनस्य पार्श्वे स्थितवन्तः।

सेनापतिना यः मन्त्रिशब्देन आहूतः सः




चित्रसेनस्य समीपम् आगत्य गौरवपूर्वकं प्रणामं कुर्वन् - "महाराज! शिबिका उपस्थिता अस्ति। आरोहणेन अनुग्राह्याः वयम्। भवतः शरीरक्लेशः किञ्चिदपि यथा न स्यात् तथा एते भवन्तं प्रासादं नीत्वा शयनगृहं प्रापयन्ति। अनुगृहणात् प्रभो" इति उक्तवान्।

मन्त्रिणः वचनश्रवणेन चित्रसेनः वस्तुतः अपि महतीं श्रान्तिम् अनुभूतवान्। 'एकपदम् अग्रे गन्तुम् अपि न शक्यते' इति भावना उत्पन्ना तस्य मनसि। अतः प्रतिवचनं किमपि अनुक्त्वा सः शिबिकायाम् उपविष्टवान्। मन्त्री हस्तसङ्केतेन शिबिकावाहान् गमनम् आदिष्टवान्। शिबिकावाहाः विधेयतया शिबिकाम् उन्नेतुं सिद्धाः अभवन्।

अत्रान्तरे कश्चित् आगत्य मन्त्रिणः कर्णे किमपि उक्तवान्। तदा मन्त्री अनङ्गीकारं प्रदर्शयन् - "कोषाधिकारिणः! न अयं युक्तः समयः। महाराजः अतीव श्रान्तः। अतः एतं विषयम् अनन्तरं निवेदयितुम् अर्हति भवान्। एतस्य निवेदने तावती त्वरा प्रदर्शनीया अपि नास्ति।" इति उक्तवान्। सः आगन्तुकः तत् अङ्गीकुर्वन् शिरः चालितवान्।

एतत् वचनं श्रुत्वा शिबिकायाम् उपविष्टः चित्रसेनः "अहो! मम न केवलं राजभवनम्, अपि तु मन्त्री, सेनापतिः, कोषाधिकारी च सन्ति। एवं तर्हि सेना कोषागारं च भवेत् एव" इति अत्यन्तम् आश्चर्यम् अनुभूतवान्। सिद्धयोगिनं कृतज्ञतापूर्वकं स्मरन् मनसा नमस्कृतवान्।

शिबिकावाहाः चित्रसेनं जागरूकतया नयन्तः राजभवनं प्रविष्टवन्तः। तत्र अट्टे विशालस्य कस्यचित् प्रकोष्ठस्य पुरतः शिबिकां भूमौ स्थापितवन्तः। चित्रसेनः शिबिकातः अवतीर्य प्रकोष्ठं प्रविष्टवान्। तत्र तेन हंसतूलिकातल्पः, मृदुभिः उपधानैः सहिता शय्या, भूमौ रत्नकम्बलानि च दृष्टानि। प्रकोष्ठः सुगन्धेन व्याप्तः आसीत्। 'एषः स्वप्नः, उत वस्तुस्थितिः' इति न ज्ञातवान् चित्रसेनः। अङ्गुलिं दष्ट्वा सः आत्मानं परीक्षितवान्।

"एतत् सर्वं सिद्धयोगिना दत्तस्य कण्डोलस्य फलम्। लघुकण्डोले सः कीदृशीं

शक्तिं निगूह्य स्थापितवान्। महत् भवनम्! भवने राजोचितानि सौकर्याणि! मन्त्रि-सेनापति-सेवकादयः! कीदृशः महिमशाली स्यात् सः! प्रतिब्रह्मा एव सः! अद्वितीयं सामर्थ्यं तस्य।"

एवम् अपरिचितस्य अपि उपकारं कृतवन्तं सिद्धयोगिनं कृतज्ञतापूर्वकं स्मृतवान् चित्रसेनः। तावति काले षड्रसोपेतं दिव्यं भोजनं तत्र आगतम्। भोजनगन्धस्य आघ्राणनेन चित्रसेनस्य बुभुक्षा द्विगुणिता अभवत्। अत्यानन्देन सः आतृप्ति भोजनं कृतवान्। अनन्तरं हंसतूलिकातल्पे शयनं कृतवान्। इदानीम् अग्रिमकार्यक्रमाणां विषये आलोचना उत्पन्ना। 'मया यत् भाग्यं प्राप्तं तत् मम परिवारसदस्यैः ज्ञातं चेत् समीचीनं भवेत्' इति चिन्तितवान् सः।

एवम् आलोचनां कुर्वन् एव गाढनिद्रायां मग्नः अभवत् सः। यदा जागरणं जातं तदा सूर्यस्य बालकिरणाः वातायनमार्गतः अन्तः पतन्ति स्म। 'एवं तर्हि गाढनिद्रां कुर्वन् अस्मिन् भवने रात्रिं यापितवान् अहम्। सुखावहा श्रान्तिहारिणी गाढनिद्रा आसीत् एषा" इति आलोचितवान् सः।

तल्पतः अवतीर्य प्रातर्विधिं समाप्य प्रकोष्ठतः बहिः आगतवान् चित्रसेनः। तावता द्वारसमीपे प्रतीक्षायां स्थितः मन्त्री - "महाराजस्य सुखनिद्रा आसीत् इति भावयामि। मनसः क्लेशः परिहृतः स्यादित्यपि भावयामि। यदि अनुमतिः तर्हि राज्यशासनसम्बन्धे प्रमुखान् विषयान् निवेदयितुम् इच्छामि" इति उक्तवान् विनयेन।

राज्यशासनविषये चित्रसेनस्य कोऽपि



अनुभवः न आसीत्। धवलगिरौ तु पितुः तारकेश्वरस्य एव राज्यशासनम्। अनन्तर-काले सिंहासनम् आरोढुम् अर्हः अग्रजः शूरसेनः। अतः इतःपूर्वं चित्रसेनः कदापि राज्यशासनव्यवहारे दृष्टिपातम् अपि न कृतवान् आसीत्। वस्तुतः तदा तस्य विशेषासक्तिः अपि न आसीत् तत्र। इदानीं तु अकस्मात् राज्यं प्राप्तम् अस्ति। शासन-विषये चिन्तनीयम् एव।

मन्त्रिणा यदा शासनसम्बन्धी प्रस्तावः कृतः तदा चित्रसेनः मातापित्रादीन् परिवार-सदस्यान् च स्मृतवान्। "अग्रजः शूरसेनः अपायात् मुक्तः सन् एतावता धवलगिरिं प्राप्तवान् स्यात्। एवं तर्हि मातापित्रादयः मम योगक्षेमविषये चिन्ताक्रान्ताः सन्ति। अतः प्रथमं मया मम क्षेमवार्ता धवलगिरिं प्रति प्रेषणीया। तेनैव सह नूतनराज्यस्य विषयः अपि निवेदनीयः। तथैव पितुः आशीर्वादः प्राप्तव्यः अपि।"

इत्येवं चिन्तयित्वा चित्रसेनः - "मन्त्रि-वर्य! धवलगिरिः भवता श्रुतः स्यात्। तस्य शासकाय तारकेश्वराय मम क्षेमवार्ता त्वरया प्रेषणीया। अवशिष्टान् विषयान् यथासमयं चिन्तयेम। क्रमशः सर्वं परि-शीलयेम। वार्ताप्रेषणार्थं झटिति व्यवस्था भवतु" इति उक्तवान्।

"यथाज्ञापयति देवः। वार्ताप्रेषणार्थं व्यवस्थाम् इदानीम् एव करोमि। कोषा-धिकारिणा कोषागारे यानि धनरत्ना-भरणादीनि सन्ति तेषाम् एका सुव्यवस्थिता पट्टिका सज्जीकृता अस्ति। तां पट्टिकाम् अत्र





आनेतुम् आज्ञां प्रेषयामि वा? यतः तस्य परिशीलनं न क्लेशाय। विश्रान्तिसमये एव परिशीलयितुं शक्यते'' इति निवेदितवान् मन्त्री।

''तथैव अस्तु। एतदर्थं कोषाधिकारिणः आगमनस्य अपेक्षा नास्ति। पट्टिकाम् आनाययत्। विश्रान्तिसमये सावधानतया परिशीलयिष्यामि'' इति उक्तवान् चित्रसेनः।

किञ्चित्कालानन्तरं कश्चन सेवकः तां पट्टिकाम् आनीय चित्रसेनस्य पुरतः स्थापितवान्। पट्टिकाम् आद्यन्तं परिशीलितवान् चित्रसेनः। 'कोषागारे पर्याप्तमात्रेण धनम्, अमूल्यरत्नानि, सुवर्णाभरणानि च सन्ति इति ज्ञायते। एतत् सम्पद्भरितं राज्यम्। प्रायः मम पितुः धनागारे अपि एतावत् ऐश्वर्यं न स्यात्। अन्यराज्येषु अपि न स्यात् एव। सिद्धयोगिनः अनुग्रहेण आगतम् इत्यतः एतत् महत्त्वपूर्णम् ऐश्वर्यम्' इति चिन्तितवान् सः।

तद्दिने सायङ्काले सः कोषाधिकारिणा सह गत्वा कोषागारे स्थितानाम् अमूल्य-वस्तूनां रत्नादीनां परिशीलनं कुर्वन् आसीत्। तावता 'तारकेश्वरः सपरिवारम् आगतः अस्ति' इति वार्ता केनचित् सेवकेन आनीता।

सन्तोषातिरेकेण चित्रसेनः पितरं स्वागतीकर्तुं प्रासादस्य मुख्यद्वारस्य समीपम् आगतवान्।

पुत्रं दृष्ट्वा तारकेश्वरः अत्यानन्देन आलिङ्गनं कृतवान्। ''पुत्र! भवतः अग्रजस्य वचनस्य आधारेण भवान् क्रूर-मृगाणाम् आहारः जातः स्यात् इति दुःखिताः आस्म। भवान् एवम् अकस्मात् महदैश्वर्यं प्राप्तवान् इति इदानीं नितरां सन्तुष्टाः स्मः। अत्र आगमनसमये बहवः भवतः विषये सम्भाषमाणाः दृष्टाः मया। वस्तुतः भवान् एतत्प्रदेशस्य राजा जातः वा? एतत् असदृशं भवनं भवदीयम् एव वा? कथं वा एतत्सर्वं भवता प्राप्तम्?'' इति उद्वेगेन पृष्टवान् सः।

चित्रसेनः अङ्गीकारपूर्वकं शिरः चालयन् मन्दस्वरेण पितरम् उक्तवान् - ''तात! तत्सर्वम् एकान्ते सविस्तरं निवेद-यिष्यामि। यतः सामान्यैः श्रोतुम् अनर्हाः रहस्यविषयाः सन्ति तत्र'' इति।

तद्दिने रात्रौ धवलगिरेः शासकस्य तारकेश्वरस्य गौरवार्थं विशेषतया भोजन-कूटस्य व्यवस्था कृता आसीत्। मनो-रञ्जनार्थम् अपि विशेषव्यवस्था कृता आसीत्। अस्मिन् कार्यक्रमे राजोद्योगिनः अटविकाः विविधदलनायकाः च भागं गृहीतवन्तः। चित्रसेनः धवलगिरेः राजपुत्रः इति ज्ञातवतां तेषां सन्तोषस्य सीमा एव न आसीत्।

कार्यक्रमस्य समाप्तेः अनन्तरं चित्रसेनः एकान्ते उपविश्य पितरं प्रवृत्तं सर्वं निवेदितवान्। सिंहात् भीतस्य अश्वस्य मरणम् आरभ्य, उग्राक्षाय ज्येष्ठपुत्रं दातुम् अङ्गीकारः दत्तः इत्यादिकं सर्वं निवेदित-वान् सः।

एतत् श्रुत्वा तारकेश्वरः उक्तवान् - "पुत्र! उग्राक्षाय यत् वचनं दत्तं तत् कथं वा परिपालयिष्यति भवान्? क्षत्रियकुलोत्पन्नः भवान्। तत्रापि राजा! एवं स्थिते प्रथमं पुत्रं राक्षसाय दातुं यत् अङ्गीकृतवान् तत् न व्यवहारसम्मतं, न वा धर्मसम्मतं च" इति।

"तात! एतावता अपि मम विवाहः एव न जातः। विवाहानन्तरम् अपि ज्येष्ठम् अपत्यं पुमान् एव यदि भवेत्, सोऽपि अष्टादश-वर्षीयः यदि स्यात् तर्हि एव किल तस्य दानस्य समस्या उद्भविष्यति? तदानीं केनापि उपायेन तन्त्रेण वा अपायात् मुक्तिं प्राप्तुं शक्येत। इदानीम् एव किमर्थं तावती चिन्ता?" इति समाधानवचनम् उक्तवान् चित्रसेनः।

पुत्रस्य वचनेन तारकेश्वरस्य मनःक्लेशः न अपगतः। किन्तु राक्षसस्य उग्राक्षस्य मारणं मानवमात्रेण असाध्यम्। यत् आगच्छति तस्य सम्मुखीकरणम् एव अव-शिष्टः मार्गः। अतः सः पुत्रम् उक्तवान् - "पुत्र! भवतः राज्यं धवलगिरेः पार्श्वे एव अस्ति। यदा कदापि वा भवतु, किमपि साहाय्यम् अपेक्षितं चेत् तत्क्षणे एव मां सूचयतु" इति।

(– अनुवर्तते)






# परिवर्तनम्

'वेतालः यथा वायौ सञ्चारं कर्तुं समर्थः, तथा अहम् अपि भवेयम्' इति उद्देशेन इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षस्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितः च। तदा शवान्तर्गतः वेतालः अवदत् - "अये महाराज! श्मशाने एवं कष्टम् अनुभवन्तं भवन्तं दृष्ट्वा अहं चिन्तयामि यत् अन्यस्य औन्नत्यं दृष्ट्वा असूयया एवं कुर्वन् अस्ति इति। अन्यः इव सर्वसमर्थः भवितुम् इच्छन् अपूर्वशक्तीः सम्पादयितुं तु एवं कष्टानि न अनुभवति किल? यदि मम सन्देहः एव यथार्थः तर्हि भवता कदाचित् पराजयः प्राप्यते एव। अत्र उदाहरणरूपेण पितापुत्रयोः कथां श्रावयिष्यामि। एतेन अन्यः लाभः न स्यात् चेदपि मार्गायासः वा परिहृतः भवेत्। अतः सश्रद्धं शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा -

## वेतालकथा



पूर्वं लवङ्गदेशे चक्रभूपतिः नाम भूस्वामी आसीत्। बहुकालपर्यन्तं तस्य सन्ततिः न जाता। 'उत्तरदायिनाम् अभावतः मम एतत् समग्रम् ऐश्वर्यं व्यर्थं भविष्यति किल?' इति बहुधा चिन्तयति स्म सः चक्रभूपतिः। सन्तानप्राप्त्यर्थम् अनेके व्रतोपवासादयः तीर्थयात्रादयः दानसत्रादयः तेन आचरिताः।

गोपालः चक्रभूपतेः सेवकः। एतौ उभौ अपि समानवयस्कौ। विचित्रं नाम गोपालः अपि यजमानः इव सन्तानराहित्य - कारणतः मनसि एव खेदम् अनुभवति। समानदुःखिनौ इत्यतः तयोः मध्ये सेवक-यजमानभावः न आसीत्। तौ स्नेहितौ इव सदा परस्परं कष्टं निवेदयतः।

एवं स्थिते कदाचित् कश्चित् संन्यासी चक्रभूपतेः ग्रामम् आगतवान्। ग्रामीणाः जनाः स्वकुटुम्बक्लेशान् व्यावहारिक समस्याः अपरिहार्याणि सङ्कटानि च संन्यासिनः पुरतः निवेदयन्ति स्म। संन्यासी तत्सर्वं सावधानतया श्रुत्वा परिहारमार्गं सूचयति स्म।

केषुचित् एव दिनेषु संन्यासी परम-सात्त्विकः इति कीर्तिं प्राप्तवान्। 'अपूर्व-शक्तिशाली' इति जनाः तस्य स्तुतिं कुर्वन्ति स्म। एकदा चक्रभूपतिः अपि पत्न्या सह एतस्य संन्यासिनः दर्शनार्थं गतवान्।

चक्रभूपतेः प्रार्थनां श्रुत्वा परमदयालुः संन्यासी तस्य पत्न्याः हस्तरेखाः परीक्षित-वान्। अनन्तरं मन्दहासपूर्वकम् आशीर्वचनानि उक्त्वा - "निराशा मास्तु, अहं मन्त्रितं किमपि वस्तु ददामि। कण्ठे एतस्य धारणेन सन्तानभाग्यं सिध्यति" इति वदन् एकां शलाकां दत्तवान्।

एतेन परमसन्तुष्टौ चक्रभूपतिः तस्य पत्नी च संन्यासिनं भक्त्या नमस्कृत्य गृहं प्रत्यागतवन्तौ।

अनन्तरदिने गोपालस्य पत्नी अपि संन्यासिनः दर्शनं कृतवती। संन्यासी एतस्यै अपि पूर्ववत् एव एकां मन्त्रितां शलाकां दत्तवान्। सा अपि सन्तोषेण गृहं प्रत्यागत-वती।

केषाञ्चित् दिनानाम् अनन्तरं चक्रभूपतेः

पत्नी, गोपालस्य पत्नी च गर्भं धृतवत्यौ। यथाकालं पुत्रं प्रसूतवत्यौ च। चक्रभूपतिः गोपालः च सन्तोषेण स्वशक्त्यनुगुणं वस्त्रदानादीनि निर्धनेभ्यः दत्तवन्तौ।

चक्रभूपतेः पुत्रस्य नाम कमलभूपतिः इति निश्चितम्। गोपालः स्वपुत्रस्य नाम चन्द्रः इति निश्चितवान्।

कमलभूपतिः चन्द्रः च प्रतिपच्चन्द्र इव वर्धमानौ जातौ। एतदनन्तरं कुटुम्बद्वये अन्यत् सन्तानं न उत्पन्नम्। अतः एतौ मातापित्रोः प्रीतिपात्रौ आस्ताम्।

यदा तौ दशवर्षीयौ जातौ तदा तयोः मध्ये भेदः स्फुटं लक्ष्यते स्म। अपरिमितसम्पत्तिसहिते कुटुम्बे जातः कलमभूपतिः सर्वेषु विषयेषु उपेक्षां प्रदर्शयति स्म। निर्धनपुत्रः चन्द्रः तु जीवनस्य भारं जानन् कष्टसुखानां परिचयं प्राप्नुवन् जागरूकतया व्यवहरति स्म।

उभौ अपि तस्मिन् ग्रामे स्थिते गुरुकुले पठतः। उभयोः स्वभावे स्थितं भेदं चक्रभूपतिः न जानाति।

कमलभूपतिः प्रतिदिनं शालां न गच्छति। शालां गच्छति चेदापि श्रद्धया पाठं न शृणोति। गृहे अपि किमपि न पठति। अतः समीचीनम् अक्षरज्ञानम् अपि प्राप्तुं न शक्तवान् सः। चन्द्रः तु अल्पे एव वयसि श्रद्धया आसक्त्या च सर्वं पठन् 'महाबुद्धिमान्' इति कीर्तिं सम्पादितवान्।



आत्मनः पुत्रं विद्याभ्यासार्थम् अनर्हं ज्ञात्वा चक्रभूपतिः अतीव खिन्नः। 'अहं धनिकः इति कृत्वा जनाः मम पुत्रं मूर्खं न वदन्ति' इति सः ज्ञातवान्। स्वसेवकस्य गोपालस्य तत्पुत्रस्य चन्द्रस्य च विषये असूया उत्पन्ना। पुत्रस्य व्यवहारविषये तीव्रः परितापः अपि आसीत् एव। चक्रभूपतिः पुत्रं मार्गे आनेतुं बहुधा प्रयत्नं कृतवान्। किन्तु प्रीतिपात्रम् अद्वितीयं पुत्रं कठोरतया दण्डयितुं सः न शक्तवान्। अतः कमलभूपतेः व्यवहारे किमपि परिवर्तनं न सिद्धम्। चक्रभूपतिः एतत्सर्वं स्मरन् बहुधा खेदम् अनुभवति।

एतावता चन्द्रः ग्रामपाठशालायां सर्वम् अधीतवान् आसीत्। इतःपरं विशेषा-

ध्ययनार्थं सः काशीं गन्तुम् इच्छति स्म।

एकदा चन्द्रः पितरं काशीगमनवार्तां निवेदितवान्। तदा गोपालः उक्तवान् - "पुत्र! भवान् काशीं गच्छति चेत् भोजन वसत्यादिकं निःशुल्कं लभ्येत। किन्तु तावता केवलम् अध्ययनं न शक्यं किल? अहं तु भवतः पुस्तकादीनां व्ययं किं, प्रयाणव्ययं दातुम् अपि न शक्नोमि। भवतः अध्यापनं मम शक्तिबाह्यः विषयः। एतत्सर्वं भवान् सम्यक् जानाति एव" इति।

वस्तुतः पितुः आर्थिकपरिस्थितिं चन्द्रः सम्यक् जानाति। अतः सः किमपि अनुक्त्वा मौनेन शिरः अवनमय्य स्थितवान्।

दिनद्वयानन्तरं चन्द्रस्य गुरुः गोपाल-समीपम् आगत्य "भोः गोपाल! भवान् पुत्रं 'विशेषाध्ययनार्थं काशीं प्रेषयितुं न शक्नोमि' इति उक्तवान् इति श्रुतवान्। भवतः पुत्रस्य बुद्धिमत्तां भवान् न जानाति इति मन्ये। अन्यथा भवान् एवं न वदेत् एव। शतप्रयत्नेन वा अतिबुद्धिमतः पुत्रस्य अध्यापनं भवतः कर्तव्यम्। अध्ययने उत्सुकं पुत्रं निराशं न करोतु" इति बोधितवान्।

एतेन उपदेशेन गोपालः पुनः अपि गाढं चिन्तितवान्। 'गुरुः यत् वदति तत् योग्यम् एव' इति निश्चित्य सः पुत्रं यथाकथमपि काशीं प्रेषयितुं सङ्कल्पितवान्। एतदर्थं यजमानस्य समीपं गतवान् च।

सः चक्रभूपतिं वस्तुस्थितिं समग्रं निवेद्य प्रार्थितवान् - "पुत्रस्य अध्यापने मम विशेषसमस्या धनस्य एव। भवान् इदानीं



मह्यं किञ्चित् धनं ददातु। अनन्तरं प्रतिमासं कञ्चन भागं न्यूनीकृत्य एव वेतनं ददातु" इति।

एतत् श्रुतवतः चक्रभूपतेः हृदये असूयाग्निः ज्वलितः अभवत्। स्वपुत्रस्य कमलभूपतेः बुद्धिहीनतां, चन्द्रस्य विशेष-बुद्धिमत्तां च सः परस्परं तोलितवान्। चिरकालात् मनसि सञ्चिता असूया कोप-रूपेण परिवृत्ता। युक्तायुक्तताम् अविचार्य सः क्रोधेन गर्जितवान्—

"भोः, किं प्रलपति भवान्! किं भवान् इदानीम् अपि आत्मानं युवकं मन्यते? वृद्धः भवान् कियत्कालं वा सम्पादयितुं शक्नुयात्? ऋणस्वीकरणं यथा सुलभं, न तथा सुलभं ऋणप्रत्यर्पणम्। स्वप्नलोके विहारं त्यक्त्वा वस्तुस्थितिं परिशीलयतु। भवतः पुत्रः पठित्वा किं बृहस्पतिः भविष्यति? कुबेरस्य ऐश्वर्यम् आनेष्यति? दुराशा मास्तु भोः। पुत्रम् अद्य एव कुत्रापि उद्योगे नियोजयतु। यावत् प्राप्यते तावता तृप्तः भवतु" इति।

गोपालः प्रतिवचनं किमपि अनुक्त्वा मौनं गृहं प्रत्यागतवान्।

गोपालस्य आगमनेन चक्रभूपतेः मनः-स्वास्थ्यं सम्पूर्णं नष्टम् अभवत्। खेदम् अनुभवन् सः वायुविहारार्थं ग्रामात् बहिः गतवान्।

ग्रामात् बहिः सरोवरस्य तीरे वृक्ष-च्छायायां यावत् सः उपवेष्टुम् उद्युक्तः तावता द्वयोः वार्तालापः तेन श्रुतः। समीपे एव वृक्षस्य अधः कमलभूपतिः चन्द्रेण सह





सम्भाषमाणः तेन दृष्टः।

''इदानीन्तनपरिस्थितौ एतौ मित्रवत् सम्भाषणं कुरुतः, उत शत्रुवत्? एतयोः सम्बन्धः कथम् अस्ति इति परीक्षणीयम्'' इति चक्रभूपतिः चिन्तितवान्। अतः विना शब्दं तयोः समीपं गत्वा आसक्त्या सर्वं श्रुतवान्।

कमलभूपतिः चन्द्रं कठोरस्वरेण वदति स्म - ''भोः! भवान् काशीं गन्तुम् इच्छति इति अहं जानामि एव। किन्तु भवतः काशीगमनम् अहं सोढुं न शक्नोमि। एतत् असाध्यम्। भवान् एतावता यावत् अधीतवान् तावत् पर्याप्तम्'' इति।

तदा चन्द्रः वदति स्म शान्तस्वरेण - ''भवान् तु वदति- मम काशीगमनं भवतः इष्टं न इति। किन्तु अत्र किं कारणम् इति तु न वदति। मम पिता तु मम प्रेषणार्थं भगीरथप्रयत्नं कुर्वन् अस्ति। ऋणं प्राप्तुं भवतः पितुः समीपं गच्छामि इति सः उक्तवान्। भवतः पिता निश्चयेन साहाय्यं करिष्यति इति मम विश्वासः'' इति उक्तवान्।

''ऋणं कृत्वा किमर्थं वा अध्ययनं करणीयम्? अध्ययनार्थं किमर्थं पितरं कष्टे पातयति? अध्ययनस्य आशां त्यजतु। अहं भवते साहाय्यरूपेण धनं दास्यामि। तेन किमपि वाणिज्यम् उद्योगं वा करोतु'' इति उक्तवान् कमलभूपतिः।

''मम धनस्य आवश्यकता अध्ययनार्थम् एव। अन्यथा धनेन मम किमपि प्रयोजनं नास्ति। विद्याभ्यासम् अर्धे त्यक्त्वा उद्योगं वाणिज्यं वा कर्तुम् अहं सर्वथा न इच्छामि'' इति उक्तवान् चन्द्रः।

एतावत् श्रुत्वा चक्रभूपतिः विना शब्दं ततः प्रस्थाय गृहं प्राप्तवान्।

एतत् सम्भाषणं श्रुत्वा चक्रभूपतिः बहु सन्तुष्टः आसीत्। सः तत्क्षणे एव गोपालम् आहूय - ''भोः, एतानि पञ्चशतं नाणकानि स्वीकरोतु। पुत्रम् अद्य एव काशीं प्रेषयतु। अग्रे यदा कदा वा धनस्य आवश्यकता आगता चेत् निस्सङ्कोचं मां पृच्छतु। चन्द्रस्य अध्ययनव्ययं समग्रम् अहं निर्वहामि। भवता अनन्तरकाले प्रत्यर्पणीयम् अपि नास्ति। एतत् धनं ऋणत्वेन न

यच्छन् अस्मि, अपि तु साहाय्यधनरूपेण" इति उक्तवान्।

वेतालः एवं कथां समाप्य अवदत् - "चक्रभूपतौ अकस्मात् एवं परिवर्तनं किमर्थम् आगतम्? पूर्वं सः ऋणदानम् अपि निराकृतवान् आसीत्। अनन्तरदिने तु उदारसाहाय्यं कर्तुं सिद्धः अभवत्। अत्र किं कारणम्? चन्द्रः तद्विषये यत् विश्वासं प्रकटितवान् तत् दृष्ट्वा सः तथा आचरितवान् वा? उत विद्यादानं पुण्यकरम् इति तथा कृतवान्? वस्तुतः तस्य हृदये पूर्वं असूया तीव्रा आसीत् किल? कथं तस्मिन् परिवर्तनं सञ्जातम्? एतस्य उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति" इति।

तदा त्रिविक्रमः उक्तवान् - "चन्द्रस्य कमलभूपतेः च मध्ये प्रवृत्तं वार्तालापं श्रुत्वा वस्तुस्थितिं ज्ञातवान् चक्रभूपतिः। तत्र कमलभूपतिः अपि चन्द्रस्य विद्याप्रौढतां दृष्ट्वा ईर्ष्यां प्राप्नोति इति। एषा आरोग्यकारी ईर्ष्या आसीत्। यतः कमलभूपतिः चन्द्रस्य विद्याप्रौढताविषये अभिमानं वहति। किन्तु आत्मनः दौर्बल्यकारणतः किञ्चिदिव ईर्ष्यां प्राप्तवान्। एतेन कमलभूपतेः गुणग्राहित्वं ज्ञायते। यदि कमलभूपतिः योग्यमार्गं बोधितः स्यात् तर्हि तस्य ईर्ष्या निश्चयेन सन्मार्गे प्रवहति। एवं च पुत्रे सल्लक्षणं दृष्टवान् चक्रभूपतिः। यदि चन्द्रः इतोऽपि उन्नतिं प्राप्नुयात् तर्हि कमलभूपतिः अपि सन्तुष्यति एव। आत्मनि अविद्यमानः गुणः अन्यत्र दृष्टः चेत् गुणग्राही निश्चयेन सन्तुष्यति। एतत्सर्वं सम्यक् विचिन्त्य एव चक्रभूपतिः साहाय्यं कर्तुं निश्चितवान्। पुत्रः कालान्तरे उन्नतिं प्रप्स्यति, सन्तोषं प्राप्स्यति च इत्युद्देशेन एव साहाय्यं कृतवान्, न तु चन्द्रस्य विद्यातृष्णां तर्पयितुं, न वा चन्द्रेण प्रदर्शितस्य गौरवस्य प्रतिक्रियारूपेण। स्वार्थं मनसि कृत्वा एव चक्रभूपतिः साहाय्यम् आचरितवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षशाखाम् अवलम्बितवान्।



# अर्थबोधः

रामपुरग्रामं कदाचित् कश्चन वेदान्ती आगतवान्। सः धर्मशालायाः पुरतः उपविश्य धर्म-न्याय-सद्व्यवहारादीनां विषये जनान् बोधयन् आसीत्।

तस्य बोधनशैल्या आकृष्टाः जनाः अधिकसङ्ख्यया तत्र आगत्य उपविशन्ति स्म। वेदान्ती आगतान् जनान् प्रार्थितवान् यत् प्रतिदिनम् आगमनसमये एकमुष्टिमितान् तण्डुलान् एकं नाणकं च आनयन्तु इति। जनाः तथैव कर्तुम् आरब्धवन्तः।

शङ्करः रामपुरस्य निवासी। आत्मनः पाण्डित्यविषये तस्य विशेषगर्वः। एकदा सः वेदान्तिनः समीपम् आगत्य नमस्कृत्य - "श्रीमन्! भवतः बोधनम् अतीव परिणामकारि। एतत् श्रुत्वा बहवः दुर्मार्गं त्यत्वा सन्मार्गे प्रवृत्ताः अभवन्। ग्रामे वृथाविवादादयः स्थगिताः सन्ति। किन्तु भवतः व्यवहारविषये मया किञ्चित् प्रष्टव्यम् अस्ति। यदि अनुमतिः दीयेत तर्हि पृच्छामि" इति उक्तवान्।

"अवश्यं पृच्छतु भोः" इति उक्तवान् वेदान्ती।

"भवान् स्वकीये उपदेशे 'दुराशा परिहर्तव्या, धनापेक्षा न उचिता' इति तदा तदा वदति। एतादृशः भवान् ग्रामीणान् तण्डुलान् धनं च आनेतुम् उक्तवान् किल?" इति पृष्टवान् शङ्करः।

तदा मन्दहासं प्रकटयन् वेदान्ती पृष्टवान् - "मम उपदेशेन ग्रामीणानां हितं सिध्यति इति तु भवतः वचनैः एव ज्ञातम्। एतादृशैः उपदेशैः इतरग्रामीणाः अपि लाभं प्राप्नुवन्तु इति मम आशयः। एतदर्थं मया प्राणाः धारणीयाः वा न वा?" इति।

शङ्करः किमपि उत्तरं वक्तुम् अशक्तः सन् मौनं ततः गतवान्।

अनन्तरदिनतः ग्रामीणाः तण्डुलैः सह लवणं, दालः, धान्यानि, शाकानि इत्यादिनि अपि आनीय दातुम् आरब्धवन्तः।






अस्माकं देवालयाः

# श्रीरङ्गम्

श्रीरङ्गदेवालये शेषशायिनः रङ्गनाथस्य विग्रहः अस्ति। एषः विग्रहः पूर्वम् अयोध्यायाम् आसीत् इति श्रूयते। श्रीरामस्य पूर्वजाः एतं विग्रहं पूजयन्तः आसन्। अनन्तरकाले अयोध्याराजभवनतः एषः अत्र आनीतः।

श्रीरामः रावणवधं कृत्वा सीतां परिगृह्य लङ्कातः अयोध्यां यदा आगतवान् तदा तेन सह विभीषणः अपि आसीत्। विभीषणः अयोध्यायां राजभवने स्थितम् एतं विग्रहं दृष्ट्वा सन्तोषं प्रकटितवान्। श्रीरामः तं विग्रहं तस्मै एव दत्तवान्।





लङ्काप्राप्तिपर्यन्तं कुत्रापि भूमौ न स्थापनीयम् इति रामेण सूचितम् आसीत्। तथापि मार्गे श्रीरङ्गप्रदेशे विभीषणः विग्रहं भूमौ स्थापितवान्। अनन्तरं महता प्रयत्नेन अपि सः तं विग्रहं ततः उन्नेतुं न शक्तवान्।





विग्रहं परितः देवालयः निर्मितः। एतत् स्थलं दिव्यक्षेत्रम् इति प्रसिद्धम् अभवत्। प्रतिदिनम् अनेके भक्ताः महानुभावाः च रङ्गनाथस्य दर्शनार्थम् आगन्तुम् आरब्धवन्तः। आण्डाळ् (गोदादेवी) रङ्गनाथं सेवमाना तस्मिन् एव ऐक्यतां प्राप्तवती।

कालान्तरे देवालयस्य प्राङ्गणं सांस्कृतिक-कार्यक्रमाणाम् आश्रयभूमिः अपि अभवत्। सुप्रसिद्धः तमिळ्कविः कम्बन्, स्वरचितं प्रसिद्धं रामायणं सर्वप्रथमं भक्तानां समक्षम् अस्मिन् एव आलये पठितवान्।





द्वादशे शतके, षोडशे शतके च मोगलराजानः देहलीतः आगत्य एतस्य उपरि आक्रमणं कृतवन्तः। कश्चित् राजा तु गर्भगृहतः विग्रहम् उन्नीय नेतुं प्रयत्नं कृतवान्। किन्तु अत्रान्तरे भक्ताः विग्रहं तिरुपतिक्षेत्रे सुरक्षितं स्थापितवन्तः। मोगलराजः उत्सवमूर्तिं केवलं नेतुं शक्तः अभवत्।

श्रीरामानुजाचार्यः मोगलराजं दृष्ट्वा उत्सवमूर्तिं पुनः श्रीरङ्गं नेतुम् अनुमतिं प्रार्थितवान्। सः राजा एतदर्थम् अनुमतिं दत्तवान्।






अत्रान्तरे मोगलराजस्य पुत्री एतस्मिन् विग्रहे अव्याजप्रीतिमती आसीत्। विग्रहवाहकं शकटम् अनुसृत्य सा अपि श्रीरङ्गं गतवती। एतस्याः भक्तेः ज्ञापनार्थम् श्रीरङ्गदेवालये इदानीम् अपि केचन मुस्लिं सम्प्रदायाः पाल्यमानाः दृश्यन्ते।

कदाचित् मोगलराजस्य सेनानायकः देवालयं धूलिसात्कर्तुं कुतन्त्रम् आयोजितवान्। एषः विषयः तेन यदा सहचराणां सम्मुखे चर्च्यमानः आसीत् तदा आलयस्य काचित् नर्तकी रहसि श्रुतवती।





एषा नर्तकी 'देवालयस्य शिखरभागे रहस्यनिधिः अस्ति' इति सूचयन्ती सेनानायकम् उपायेन मन्दिरशिखरप्रदेशं नीतवती। सुसमयं प्रतीक्षमाणा सा सेनानायकस्य पादयोः अधः स्थितं शिलाफलकम् आकृष्टवती। सेनानायकः मन्दिरशिखरतः प्राङ्गणे पतितवान्, गतप्राणः जातः च।

सप्तप्राकारयुते, सहस्रस्तम्भयुते च मण्डपे ओङ्कारविमानं राराजते। एतस्य देवालयस्य भित्तिषु स्तम्भेषु च अपूर्वाः शिल्पकलाकृतयः परिदृश्यन्ते।





एतस्मिन् देवालये प्रवर्तमानेषु उत्सवेषु प्रधानः वैकुण्ठ-एकादशी। अस्यां तिथौ योगमायास्वरूपिणी एकादशीदेवी मुरासुरस्य संहारं कृतवती आसीत्। अस्मिन् पुण्यदिने रङ्गनाथस्य दर्शनं पुण्यप्रदम् इति भक्तानां विश्वासः।



# सहनशक्तिः

कश्चन ग्रामः। तत्र सोमनाथनामकः कश्चन दुष्टः निवसति स्म। तस्य गृहस्य एकस्मिन् पार्श्वे नारायणस्य गृहम्, अन्यस्मिन् पार्श्वे मल्लिनाथस्य गृहं च आस्ताम्। सोमनाथः सर्वदा येन केनापि कारणेन प्रातिवेशिकजनान् निन्दन्, कलहम् उत्पादयन् मनोविनोदं प्राप्नोति स्म।

तस्य एतादृशं विलक्षणस्वभावं मल्लिनाथः नैव लक्षयति स्म। सः सोमनाथस्य दुष्टचेष्टाः सहते, तथा निश्चिन्तभावेन स्वीयकार्याणि करोति।

किन्तु नारायणस्य तादृशी सहनशक्तिः न आसीत्। सः अनेकवारं सोमनाथेन सह कलहं करोति। सोमनाथः कलहम् एव इच्छति। अतः सः उच्चतरेण ध्वनिना आक्रोशं कुर्वन्, गर्जन् कलहं करोति। नारायणः भीतः भूत्वा शनैः शनैः स्वगृहं गच्छति। तदा सोमनाथः विजयिभावेन सोत्साहम् इतस्ततः चलति।

"मां क्रुद्धं करोति वा? अहं नैव सामान्यमनुष्यः। पश्यतु, भवन्तं किं करोमि इति! बहिः आगच्छतु रे!" इति यां कामपि प्रतिज्ञां कुर्वन् इव गर्जति सोमनाथः।

एतावदेव न। सोमनाथः स्वीयगृहे सङ्गृहीतम् अवकरादिकं नीत्वा नीत्वा प्रातिवेशिकगृहाणां पुरतः क्षिपति अपि। "तथा क्रियते चेत्, तदा न केवलं नारायणः, अपि तु मल्लिनाथः अपि कलहार्थम् आगच्छति। तदा तम् अपि आतृप्ति भर्त्सयित्वा विनोदः प्राप्तव्यः" इति सोमनाथस्य आशा। किन्तु मल्लिनाथः कदापि कुपितः न भवति। तदा नारायणः एवं चिन्तयति यत् मल्लिनाथः किञ्चित् साहाय्यं करोति चेत् सोमनाथं दण्डयितुं शक्नोमि किल इति।

एवं चिन्तयन् नारायणः स्वीयम् अभिप्रायं मल्लिनाथं कथितवान्। मल्लिनाथः तम् अतीव सामान्यविषयम् इव श्रुत्वा, हसन्



''पश्यतु भोः नारायण, प्रातिवेशिकैः सह कलहं कर्तुम् अहं नैव इच्छामि। सः न उत्तमः अभ्यासः। किञ्च इदानीं तादृशकष्टं किं वा आपतितम्?'' इति पृष्टवान्।

तस्य वचनं श्रुत्वा नारायणः क्रुद्धः अभवत्। तेनैव कारणेन एकदा नारायणः मल्लिनाथस्य परोक्षे स्वीयगृहस्य अवकरादिकं तस्य गृहस्य पुरतः क्षिप्तवान्। किन्तु अनन्तरं मल्लिनाथः तत्सर्वं मार्जयित्वा दूरं स्थापितवान् किमपि प्रतिकारं नैव कृतवान्।

दिनद्वयानन्तरं नारायणः मल्लिनाथस्य समीपं गत्वा ''सः सोमनाथः भवतः मम च मध्ये कलहम् उत्पादयितुं मम गृहस्य पुरतः स्थितम् अवकरं नीत्वा भवतः गृहस्य पुरतः स्थापयति किल। तस्य दुष्टता प्रतिदिनं वर्धमाना अस्ति। मनुष्यस्य कस्मात् अपि भीतिः नास्ति चेत् कथम्? यथा कथञ्चित् एतस्य प्रतीकारः अवश्यं करणीयः'' इति उक्तवान्।

तदा मल्लिनाथः ''तस्य स्वभावं वयं जानीमः एव। सः यथा करोति, तथा वयम् अपि कुर्मः चेत्, तस्य च अस्माकं च कः भेदः अवशिष्टः? भवतः उपरि मम विश्वासः अस्ति। अल्पस्य बृहत्करणापेक्षया मौनम् एव वरम्'' इति उक्तवान्।

नारायणः तद्वचनम् असहमानः ''मौनस्यापि काचित् सीमा अस्ति खलु? भवतः गृहस्य पुरतः एतावत्प्रमाणकं मालिन्यादिकं क्षिप्तम् अस्ति। तथापि भवान् कथं तूष्णीं तिष्ठति?'' इति पृष्ठवान्।

''तत्र किमस्ति कष्टम्! वयं अस्माकं गृहस्य पुरतः प्रतिदिनं मार्जनादिकं कुर्मः किल? तेन सह अन्येन स्थापितम् अवकरम् अपि मार्जयित्वा दूरे क्षिपामः। अत्र कः क्लेशः?'' इति मल्लिनाथः शान्तस्वरेण पृष्टवान्।

''भवान् सर्वदा एवं तूष्णीं तिष्ठति। अतः एव सः सोमनाथः तावान् गर्वितः जातः। इदानीं तूष्णीं स्थातुं नैव शक्यते। यथा-कथञ्चित् तस्य गर्वभङ्गः करणीयः'' इति उक्तवान् नारायणः क्रोधेन।

मल्लिनाथः शान्तस्वरेण एव ' नारायण! एकं विषयं सम्यक् जानातु। गृहस्य पुरतः अवकरादिकं किञ्चित् वा अस्तु, अधिकं वा

भवतु, तत् मार्जयित्वा शुद्धीकर्तुं अधिकं समयव्ययः नैव भवति। किन्तु सोमनाथेन सह कलहं कुर्मः चेत् महान् कालः वृथा गच्छति" इति उक्तवान्।

"एवं वयं तूष्णीं तिष्ठामः चेत्, वयं दुर्बला इति खलु सः चिन्तयति?" इति पृष्टवान् नारायणः।

"वयं तु वस्तुतः न दुर्बलाः। सः तथा चिन्तयतु नाम। अस्माकं का हानिः? अथवा वयं दुर्बलाः इति अङ्गीकुर्मः इत्येव चिन्तयतु। तदा अपि सोमनाथस्य चिन्तनेन अस्माकं दौर्बल्यं न न्यूनीभवति, न वा वर्धते" इति उक्तवान् मल्लिनाथः।

नारायणः किञ्चित्कालं यावत् आलोच्य "वयम् इच्छामः चेत्, सः यावत् पीडयति ततोऽपि अधिकं तं पीडयितुं समर्थाः खलु?" इति उक्तवान्।

"तत्तु कथं शक्यते भोः। सोमनाथस्य तु किमपि कार्यं नास्ति। अस्माकं तु कार्याणि कर्तुं सर्वदा समयाभावः। किञ्च यः चतुरः भवति, सः स्वीयकष्टानि अपि अनुकूलरूपेण परिवर्तयति। इदानीं सोमनाथः अपि मम उपकारम् एव कृतवान्" इति उक्तवान् मल्लिनाथः।

"किं, किम्? सोमनाथः भवतः उपकारं करोति वा?" इति अत्याश्चर्येण पृष्टवान् नारायणः।

"सत्यम्। सोमनाथस्य दुष्टचेष्टाः सोढुं मम मदीयजनानां च किञ्चित् कष्टमेव। तस्य स्मरणेन एव मम मनसि अग्निः ज्वलति। अतः तस्य स्मरणम् एव मास्तु इति निश्चयं कृतवान् अस्मि। मद्गृहीयाः अपि



तथैव निश्चयं कृतवन्तः सन्ति। तदर्थं प्रयत्नम् अपि सततं कुर्मः" इति उक्तवान् मल्लिनाथः।

"तदर्थं किं कुर्वन्ति?" इति पृष्टवान् नारायणः।

"पूर्वापेक्षया अहम् इदानीम् अधिककालं कृषिकार्येषु उद्यानपालने च यापयामि। अस्माकं गृहे अन्ये अपि कण्डोलकरणं, कटोत्पादनं, पाञ्चालिकानिर्माणं इत्यादिषु कार्येषु प्रावीण्यं सम्पादयन्तः सन्ति। तेन अस्माकं कुटुम्बस्य आयः प्रवर्धमानम् अस्ति। एतत् सर्वं पश्यामः चेत् सोमनाथेन अस्माकं महान् उपकारः एव कृतः इति खलु वक्तव्यम्" इति उक्तवान् मल्लिनाथः।

तस्य वचनं श्रुत्वा नारायणः आश्चर्येण स्तब्धः जातः। ततः सः स्वीयं गृहं गत्वा जातं सर्वं वृत्तान्तं पत्नीं कथितवान्।

सा अपि आश्चर्येण "सत्यं भोः, एवं रीत्या वयं कदापि नैव चिन्तितवन्तः। वयम् अपि मल्लिनाथम् एव अनुसराम। अहं तु सीवनकार्यं जानामि" इति उक्तवती नारायणस्य पत्नी। तदारभ्य नारायणः, तस्य पत्नी, अन्ये च मल्लिनाथेन उक्तरीत्या एव कर्तुम् आरब्धवन्तः। तदा तस्य आयः अपि वर्धमानं दृष्टम्। तदा सोमनाथस्य विचारं स्मर्तुम् अपि तेषाम् अवकाशः न आसीत्।

काले गच्छति सति सोमनाथस्य प्रातिवेशिकगृहाणि बृहत्सौधानि जातानि। स्वीयदुष्टचेष्टानां कामपि प्रतिक्रियां विरोधं वा अप्राप्तवतः सोमनाथस्य जीवनं नीरसं जातम्।

अल्पानि प्रातिवेशिकगृहाणि बृहद्भवनानि जातानि इत्येतत् दृष्ट्वा सोमनाथः असूयया दह्यमानः, क्रमेण मनोवैकल्यं प्राप्तवान्।

"मम कारणतः एव एतेषां तृणकुटीराः बृहद्भवनरूपं प्राप्तवन्तः। इतोSपि अधिककालं यावत् अत्र वसामि चेत् मम अस्तित्वम् एव नश्येत्" इति चिन्तयन् सोमनाथः स्वीयं गृहं, क्षेत्रादिकं च विक्रीय ग्रामान्तरं गतवान्।





# शिवलीला

चिरुतोण्डः महान् शिवभक्तः इति कैलासवासिनः सर्वे वदन्ति स्म। तत् श्रुत्वा पार्वती तं द्रष्टुम् अपेक्षितवती। तदर्थं शिवः मनसि एव किमपि आलोच्य, काञ्चीपुर-प्रान्ते अतिवृष्टिम् उत्पादयितुम् इन्द्रं सूचितवान्। तदा काञ्चीपुरे एकविंशति-दिनानि यावत् निरन्तररूपेण वृष्टिः अभवत्। अनन्तरं द्वाविंशतितमे दिने वृष्टिः स्थगिता, तथा सूर्यप्रकाशः दृष्टः। तेषु दिनेषु अपि चिरुतोण्डः शिवभक्तेभ्यः अहोरात्रं भोजनं ददाति स्म। मध्ये मध्ये यदा पाककार्यार्थं काष्ठानाम् अभावः जातः, तदा वस्त्राणि तैलेन आर्द्रीकृत्य तैः कारयति स्म। एवंरीत्या तेषु दुर्दिनेषु अपि तस्य व्रतभङ्गः न अभवत्। किन्तु यदा वृष्टिः समाप्ता तथा प्रकाशः व्याप्तः, तस्मिन् दिने चिरुतोण्डस्य गृहं कोऽपि अतिथिः न आगतवान्।

मध्याह्नः जातः। चिरुतोण्डः बहिः आगत्य अतिथिकृते प्रतीक्षणं कुर्वन् स्थितवान्। किन्तु एकः अपि अतिथिः दृष्टिगोचरः न अभवत्। तदा चिरुतोण्डः दुर्गम् अतीत्य गत्वा बहिर्भागे अन्वेष्टुम् आरब्धवान्।

अन्ते कस्यचित् उद्यानस्य समीपे एकस्मिन् जीर्णदिवालये उपविष्टौ वृद्धदम्पती दृष्टौ। वृद्धस्य श्वेतवर्णीयाः केशाः जटाभूताः आसन्। मुखे भस्मरेखाः शोभमानाः आसन्। वृद्धा तु अन्धा आसीत्। स्वीयव्रतस्य कृते युक्तौ अतिथी एतौ एव चिरुतोण्डनम्बिः चिन्तितवान्।

चिरुतोण्डः तयोः समीपं गत्वा, अञ्जलिबद्धः सन् नमस्कारं कृत्वा "अद्य कृपया भवन्तौ मम गृहं समागत्य, शिवार्चनां

३. चिरुतोण्डस्य दीक्षा



कृत्वा, मां कृतार्थं कुरुताम्" इति उक्तवान्।

तदा सः वृद्धः "एकवर्षतः आरभ्य अहं निराहारव्रतम् आचरन् शिवपूजां कुर्वन् अस्मि। इदानीं नरमांसभक्षणद्वारा तस्य व्रतस्य उद्यापनं करणीयम्। तदर्थं ब्राह्मण-क्षत्रिय-वैश्यकुलेषु अन्यतमवंशे जातः मनुष्यः अपेक्षितः। सः अल्पवयस्कः आरोग्यवान् च भवेत्। मातापितृभ्याम् एव सः हन्तव्यः। तस्य मांसेन भवता पाकः करणीयः। आवाभ्यां सह उपविश्य भवता अपि भोजनं करणीयम्। एतादृशजनाः दुर्लभाः। अतः एव व्रतस्य अवधेः समाप्त्यनन्तरम् अपि उद्यापनं कर्तुम् असमर्थः भूत्वा निराहारी अस्मि" इति उक्तवान्।

तस्य वचनं श्रुत्वा चिरुतोण्डः विनयेन "मम नाम चिरुतोण्डनम्बिः इति। शिव-भक्तानां व्रतानां समाप्तिकरणं तु मम आद्यव्रतम्। यथा भवता पृष्टं, तथा एव सन्तोषेण आरोग्यवतः बालस्य मांसेन पाकं कारयिष्यामि। भवन्तौ मम गृहं समागच्छताम्" इति उक्तवान्।

"केवलं भवतः अङ्गीकारः न पर्याप्तः भोः। भवतः पत्न्या अपि मम नियमाः अङ्गीकरणीयाः" इति उक्तवान् वृद्धः।

तत्क्षणे एव चिरुतोण्डः गृहम् आगत्य जातं सर्वं वृत्तान्तं तिरुवेङ्गनाञ्चीं कथितवान्।

"स्वीयमांसम् अपि कर्तयित्वा, तं पक्त्वा परिवेषयितुं वयं सिद्धाः खलु? एवं हि सति किमर्थं सन्देहः? अन्यबालः किमर्थम्? अस्मदीयः एव अस्ति खलु? शीघ्रं गत्वा तौ आनयतु" इति उक्तवती तिरुवेङ्गनाञ्ची।

एतन्मध्ये वृद्धवेषधारी शिवः किमपि अन्यरूपं धृत्वा सिरियालस्य पाठशालां गत्वा, तं बालं "भोः वत्स, भवतः पिता महादुष्टः जातः अस्ति। भवन्तं हत्त्वा, पाकं कृत्वा, कस्मैचितु वृद्धतापसाय परिवेषयितुम् इच्छति। तस्य वृद्धस्य व्रतोद्यापननियमः तथा अस्ति इति श्रुतम्। भवान् तेषां दृष्टिगोचरः मा भवतु। यत्र कुत्रापि धावित्वा एतद्विपत्तितः आत्मरक्षणं साधयतु" इति उक्तवान्।

"आर्य, भवतः वचनं विलक्षणम् अस्ति। परोपकारार्थम् इदं शरीरम् इति वदन्ति



वृद्धः चिरुतोण्डनम्बिं "भवता भवदीय-पुत्रेण च आवाभ्यां सह उपविश्य भोजनं करणीयम्। एकः पुत्रः अस्ति इति उक्तवान् किल? सः कुत्र? तम् आह्वयत्" इति उक्तवान्।

"अस्मदीयः पुत्रः कुत्रापि गतवान् स्यात्। भोजनं शीतलं भवति। भवतोः भोजनं प्रथमम्। अनन्तरं अस्माकं भविष्यति एव" इति उक्तवान् चिरुतोण्डः।

"भोजनसमयः खलु, अत्रैव समीपे स्यात्। तम् आनेतुं पत्नीं सूचयतु" इति उक्तवान् वृद्धशिवयोगी।

तिरुवेङ्गनाञ्ची अतिथिजनसमाधानार्थं किञ्चद्दूरं गत्वा "भोः वत्स, सिरियाल! आगच्छतु भोः!" इति आहूतवती।

"आगच्छामि अम्ब!" इलि प्रतिवदन् सिरियालः धावन् तत्र आगतवान्।

चिरुतोण्डः यावत् वृद्धदम्पती पश्यति, तावत् तत्र पार्वतीपरमेश्वरौ प्रत्यक्षीभूतौ आस्ताम्। तौ तस्य शिवभक्तिं श्लाघयित्वा, तस्य पूर्वजन्मवृत्तान्तं कथयित्वा च तिरोहितौ जातौ।

किल। दधीचिः, शिबिः इत्यादयः किं मूर्खाः वा? अहं कुत्रापि न धावामि। भवान् गत्वा स्वीयकार्यं पश्यतु" इति सिरियालः उत्तरं दत्तवान्।

चिरुतोण्डः पुनः देवालयम् आगत्य, वृद्धब्राह्मणं भुजोपरि वहन्, अन्धां वृद्धां हस्तावलम्बनेन चालयन् स्वीयं गृहम् आनीतवान्। अनन्तरं मातापितरौ सिरियालं स्नापयित्वा अलङ्कृत्य "वत्स, शिवयोगिनः आहारः भवति वा?" इति पृष्टवन्तौ।

"सन्तोषेण भवामि" इति उक्तवान् सिरियालः। माता स्वपुत्रं स्वीयं अङ्के शायितवती। चिरुतोण्डनम्बि पुत्रं हतवान्। अनन्तरं पतिः पत्नी च सिरियालस्य मांसं पक्त्वा वृद्धदम्पती परिवेषितवन्तौ।

दक्षिणदिग्भागे पोत्तनिनाडुनामके प्रदेशे एकं महारण्यम् आसीत्। तस्मिन् अरण्ये शबरजातीयाः वसन्ति स्म। तेषां प्रधाननगरस्य नाम उडुमूरु इति।

नायनाथः तेषां शबराणां राजा। तस्य पत्न्याः नाम तण्डा इति। तयोः एकः पुत्रः जातः। तस्य नाम तिन्नः इति। क्रमेण

वर्धमानः तिन्नः धनुर्विद्यायाः सम्यक् अभ्यासं कृतवान्। सः एतावत्शीघ्रं धनुर्विद्यापटुः अभवत्, यत् सः तस्याः विद्यायाः अभ्यासं कृत्वा एव जन्म गृहीतवान् वा इति संशयः भवेत्। धनुर्ग्रहणतः चत्वारिंशद्दिनेषु एव सः धावन्तं हरिणं, आकाशे डयमानान् खगान् च सलीलं मारयितुं समर्थः अभवत्। तत्सदृशः धनुर्धरः शबरेषु अन्यः कोऽपि न आसीत्।

इदानीं तिन्नः मृगयाविद्यायाः अभ्यासं करोतु इति शबराः स्वीयं महाराजं प्रार्थितवन्तः। प्रप्रथमं सर्वे शबराः शिवं पूजयित्वा, तस्मै बलिं समर्पितवन्तः। यथेच्छं मद्यपानं कृत्वा, गायन्तः, नर्तनं कुर्वन्तः च महता सन्तोषेण उत्सवम् आचरितवन्तः।

द्वितीयदिने शबरराजः कांश्चन समर्थान् शबरान् विचित्य स्वीयपुत्रेण सह मृगयार्थं गन्तुं तान् नियोजितवान्। रज्जुः, दण्डाः, जालानि, शुनकाः इत्यादीनि मृगयार्थम् अपेक्षितानि वस्तूनि सज्जीकृतवन्तः। एवं-रीत्या सन्नद्धः तिन्नः स्वजातीयैः सह तिरुपतिपर्वतं प्रति मृगयां शिक्षितुं प्रस्थित-वान्।

तस्य मृगया ससन्तोषं सोत्साहं प्राचलत्। शबराः विविधान् प्राणिनः खगान् च हतवन्तः। मारितानां प्राणिनां मांसं अग्नौ पक्त्वा, वन्यमधु मिश्रयित्वा यथेच्छं खादितवन्तः। एवंरीत्या मृगया विहारा-




सक्ताः सर्वे शबराः महता आनन्देन कालं यापयन्तः अनेकदिनानि यावत् वने एव स्थितवन्तः।

एकस्मिन् दिने तिन्नः मृगयां समाप्य कस्यचित् वृक्षस्य छायायां निद्रितवान्।

निद्रामध्ये सः एकं स्वप्नम् अनुभूतवान्। स्वप्ने सः एकं महापुरुषं दृष्टवान्। तस्य पुरुषस्य सम्पूर्णं शरीरं भस्मलेपितम् आसीत्। कटिप्रदेशः व्याघ्रचर्मणा आवृतः आसीत्। जटाभूताः रक्तवर्णीयाः केशाः तस्य मुखं परितः लम्बमानाः आसन्। कण्ठे धृतायाः कपालमालायाः मध्ये वक्षःप्रदेशे शिवलिङ्गं दृश्यते स्म। सः तिन्नं दृष्ट्वा प्रीत्या "वत्स, एतस्य पर्वतस्य पार्श्वे, सुवर्णमुखीनद्याः तीरे एकः वटवृक्षः अस्ति।

तस्य मूले शिवः वसति। तं पूजयतु" इति उक्त्वा तिरोहितः अभवत्।

तिन्नः निद्रान्तः जागरणं प्राप्य आश्चर्येण परितः अवलोकितवान्। स्वीयाः सहचराः मृगयामग्नाः आसन्। तेषां कोलाहलशब्दाः उच्चैः श्रूयमाणाः आसन्। अत्रान्तरे कश्चित् वनसूकरः व्याधानां हस्तेभ्यः आत्मानं रक्षन् घुरघुरायमाणः उच्चैः आक्रोशं कुर्वन् इतः एव धावन् आगतवान्। तिन्नः उत्थाय तं मारयितुं तम् एव अनुसरन् धावितवान्। किन्तु सः वनसूकरः बहुवेगेन धावन् बहुदूरं यावत् तं नीत्वा एकत्र तिरोहितः अभवत्।

यत्र सः अगोचरः अभवत्, तत्रैव एकः शिवालयः आसीत्। स्वप्ने दृष्टेन महापुरुषेण कथितानि सर्वाणि चिह्नानि तत्र आसन्। तानि दृष्ट्वा एतत् सर्वं शिवमायाफलम् एव इति ज्ञात्वा तिन्नः आनन्दाश्रुभरितः जातः। मूर्तिमती भक्तिः इव मूर्तिमान् सः तत्र स्थितं लिङ्गं साष्टाङ्गं नमस्कृत्य - "भोः स्वामिन्, एतस्मिन् वनप्रदेशे, व्याघ्राणां सिंहानां च सञ्चारस्थने, जलस्य समीपे भवान् किमर्थं निवसति? बुभुक्षासमये भवते कः खाद्यानि पानीयं च ददाति? अस्माकं उड्यूरुनगरम् आगच्छतु देव। मम अग्रजाः अनुजा च सूकरमांसं पक्षिणां मांसं च सम्यक् पक्त्वा भवते परिवेषयन्ति। विविधधान्यानां पायसादिकं कृत्वा पाययन्ति। मधुरं मधु विविधफलानि च तत्र लभ्यन्ते। भवान् मया सह आगच्छतु। नो चेत् अहम् इतः नैव गच्छामि" इति उक्तवान्।

अत्रान्तरे तिन्नस्य अन्वेषणं कुर्वन्तः अन्यशबराः तत्र आगत्य "भोः तिन्न, भवता धावितः वनसूकरः कुत्र गतः?" इति पृष्ठवन्तः। शिवध्यानपरः तिन्नः किमपि न उक्तवान्। तदा ते तं गृहं नेतुम् आग्रहं कर्तुम् आरब्धवन्तः।

"एषः शिवः मया सह आगच्छति चेत्, एव अहम् अपि आगच्छामि। नो चेत् नैव। भवन्तः सर्वे गच्छन्तु" इति उक्तवान् तिन्नः। एवम् उक्त्वा पुनः शिवध्यानमग्नं तिन्नं वाचयितुं चालयितुं वा असमर्थाः सर्वे शबराः ततः निर्गतवन्तः।





# राज्यप्राप्तिः

पूर्वं फ्रिजियादेशे गार्डियन्नामकः कश्चन युवकः कृषीवलः आसीत्। कदाचित् सः स्वीयं बृहत्शकटम् आरुह्य नगरं प्रति प्रस्थितवान्।

यदा सः किञ्चिद्दूरं गतवान्, तदा अकस्मात् एकः गरुडपक्षी डयमानः तस्य शकटस्य समीपम् आगत्य, तस्य द्वयोः वृषभयोः मध्ये युगस्य उपरि उपविष्टवान्। एतत् तु शुभशकुनम् इति ग्रीक्जनानां विश्वासः।

तस्मिन् एव समये टेल्मिससनगरस्य राजा अकस्मात् दिवङ्गतः। राज्यं प्रभुशून्यं जातम्। तस्याम् अवस्थायां काचित् अलौकिकशक्तिः एकस्याः भक्तायाः शरीरं प्रविष्टा। तदा परितः उपस्थितान् जनान् उद्दिश्य भक्तायाः मुखद्वारा एतानि वाक्यानि निर्गतानि "भवन्तः चिन्तां न कुर्वन्तु। राजा वृषभशकटे उपविश्य भवतां समीपम् एव आगच्छन् अस्ति। शकटे तस्य पार्श्वभागे तस्य भावी राज्ञी अपि उपविष्टा अस्ति। शकटस्य युगस्य उपरि एकः गरुडपक्षी अपि अस्ति" इति।

एतानि वाक्यानि श्रुत्वा नागरिकाः महता सन्तोषेण नूतनमहाराजं निरीक्षमाणाः एकत्र स्थितवन्तः।

तदा तत्र स्थित्वा भक्तायाः वचनानि ये श्रुतवन्तः, तेषु अन्यतमा काचन युवती शीघ्रं शीघ्रं नगरस्य बहिर्भागं प्रति धावितवती।

एवंरीत्या धावन्ती यदा सा नगरात् बहिः आगतवती, तदा वृषभद्वयसहितः एकः शकटः तस्याः पुरतः आगच्छन् दृष्टः। तस्य युगस्य उपरि गरुडपक्षी उपविष्टः आसीत्। शकटस्य अन्तः एकः युवकः उपविष्टः आसीत्। अन्यः कोऽपि न दृष्टः।

नगरात् धावन्ती आगता युवती शकटस्य पुरतः स्थित्वा गार्डियनं दृष्ट्वा "तिष्ठतु, अहम् अपि शकटम् आरुह्य तस्मिन्

उपविशामि" इति उक्तवती। तस्याः यत्किञ्चित् विशेषकार्यं स्यात् इति चिन्तयन् गार्डियनः शकटं स्थगितवान्। तदा सा शकटम् आरुह्य तस्य पार्श्वभागे उपविष्टवती।

"पश्यतु भोः, यदि भवान् मां परिणेतुम् अङ्गीकरोति, तर्हि सायङ्कालतः पूर्वं यथा भवतः कश्चन महायोगः सिद्ध्येत्, तथा अहं करिष्यामि" इति उक्तवती सा युवती।

गरुडस्य दर्शनात् आरभ्य यःकश्चन शुभयोगः सिद्ध्येत् इति गार्डियनः चिन्तयन् एव आसीत्। अतः तस्याः वचनानि श्रुत्वा सः आश्चर्यं नैव अनुभूतवान्। प्रत्युत सः ताम् आपादमस्तकं दृष्ट्वा "यथा भवत्याः सौन्दर्यम् अस्ति, तथा विवेकः अपि अस्ति चेत्, भवतीं परिणेतुं मम कोऽपि आक्षेपः नास्ति" इति उक्तवान्।

"मम विवेकस्य विषये संशयलेशः अपि मास्तु" इति उक्त्वा सा इतःपूर्वं सञ्जातं सर्वं वृत्तान्तं गार्डियनं कथयित्वा "अहं भवता सह शकटे न उपविशामि चेत्, भवतः राजयोगः नास्ति एव" इति उक्तवती।

गार्डियनः अङ्गीकारं सूचयन् शिरः चालितवान्। शकटः अग्रे गच्छन् सायङ्कालतः किञ्चित्पूर्वं नगरं प्राविशत्। वृषभद्वययुक्तं शकटं, युगस्य उपरि गरुडं, शकटे उपविष्टौ युवतीयुवकौ च सर्वे जनाः दृष्टवन्तः। तदा ते सर्वे युगपत् 'अस्माकं महाराजः जयतु! अस्माकं महाराजः जयतु!' इति जयघोषं कृतवन्तः।

एवंरीत्या गार्डियनः, टेल्मिससनगरस्य राजा अभवत्। अनन्तरं सः स्वीय भाग्योत्पादकं शकटस्य युगं, तस्य आधारदण्डं च योजयित्वा विलक्षणम् एकं ग्रन्थिं निर्मितवान्। तत् द्वयं भगवते समर्प्य, देवालये संस्थाप्य "यः एतद्ग्रन्थिच्छेदं करिष्यति, सः समस्तलोकस्य चक्रवर्ती भविष्यति" इति उक्तवान् गार्डियनः।

समस्तप्रपञ्चं जेतुं बद्धकङ्कणः भूत्वा प्रस्थितः अलेक्सांडरः अपि तं ग्रन्थिं शिथिलीकर्तुम् असमर्थः भूत्वा, स्वीय-खड्गेन ग्रन्थिच्छेदं कृतवान् इति श्रूयते।





# पिशाचानां ज्यौतिषम्

अम्बापुरनामके ग्रामे साम्बनामकः कश्चन युवकः आसीत्। सः स्वीयगृहस्य आवरण-भागे शाकानि उत्पाद्य, तानि नगरे विक्रीय जीवनं यापयति स्म।

एकस्मिन् दिने सः कण्डोलेषु फलानि नीतवान्। यदा समस्तशाकानां विक्रयणं समाप्तं, तदा सूर्यः अस्तं गतः। मस्तकभारः परिहृतः, तथा कोषः भारभूतः अभवत्। तेन बहुसन्तुष्टः सः स्वीयग्रामं प्रति प्रत्यागच्छति स्म।

एकयामपर्यन्तं सः मार्गक्रमणं कृतवान्। तदा तत्र एकं तिन्त्रिणीवनं सम्प्राप्तम्। तत् वनं प्रविश्य सः यदा चलन् आसीत्, तदा विद्युद्विलसनं मेघगर्जनादिकम् आरब्धम्। अनन्तरं वृष्टिरपि प्रवृत्ता। साम्बः किञ्चिद्-दूरं यावत् धावितवान्। किन्तु वृष्टिः तीव्रतरा अभवत्। तदा सः मार्गस्य पार्श्वे स्थितस्य कस्यचित् तिन्त्रीणीवृक्षस्य अधोभागे स्थितवान्।

"इदानीं का गतिः?" इति चिन्तयन् साम्बः इतस्ततः दृष्टिं पातयन् आसीत्। तदा एकत्र तीक्ष्णं ज्वलता अग्निना सहिता काचित् हसन्ती दृष्टा। आश्चर्यम् अनुभवन्, वृष्ट्याम् एव चलन् सः तम् अग्निं प्रति गतवान्।

अग्नेः समीपगमनसमनन्तरम् एव सः स्वप्रयत्नं विना एव आक्रोशं कृतवान्। भयेन तस्य सर्वाणि अङ्गानि कम्पितानि। किमर्थम् इति चेत्, हसन्तीं परितः तिस्रः आकृतयः आसन्। ते न मानवाः, अपि तु विकाररूपाः पिशाचाः।

साम्बस्य आक्रोशं श्रुत्वा पिशाचाः तं दृष्ट्वा "आगच्छतु रे मानव! भयं मास्तु, सधैर्यम् आगच्छतु। वयं भवन्तं न गिलामः। आगत्य अत्र उपविशतु। भवान् अम्बापुर-ग्रामवासी खलु? श्वः भवतः ग्रामे किं प्रचलिष्यति इति जानाति वा? जानाति चेत्



किञ्चित् वदत् पश्यामः'' इति उक्तवन्तः।

पिशाचानां वचनानि श्रुत्वा ते न दृष्टपिशाचाः इति ज्ञात्वा साम्बः किञ्चित् धैर्यं प्राप्तवान्। सः तेषां समीपं गत्वा ''अहं शाकानां विक्रेता दरिद्रः सामान्यः च कश्चित् मानवः। अहं ज्यौतिषं न जानामि। विद्यावान् अपि न'' इति उक्तवान्।

''एवं वा? तर्हि भवतः ग्रामस्य भविष्य-विचारम् अहं वदामि शृणोतु'' इति उक्त्वा एकः पिशाचः पुरतः किञ्चित् अवनम्य, हसन्तीतः चतुरः अङ्गारान् गृहीत्वा, मुखे संस्थाप्य, तान् गिलितवान्। ''भवतः ग्रामस्य पाठशालायाः पार्श्वे एकः निम्बवृक्षः अस्ति किल? सः वृक्षः गतसप्ताहे प्रवृत्तस्य झञ्झावातस्य प्रहारेण झर्झरितः भूत्वा, किञ्चित् किञ्चित् अधः नमन् अस्ति। श्वः प्रातः सः वृक्षः पाठशालायाः उपरि महता वेगेन प्रपतिष्यति'' इति उक्तवान्।

द्वितीयः पिशाचः अपि हसन्तीतः अङ्गारान् गृहीत्वा, एकैकम् एव स्वशिरसि निक्षिपन् ''सायङ्काले भवतः ग्रामदेवतायाः रथोत्सवः भविष्यति किल? तस्मिन् समये देवालयस्य गजः अकस्मात् मदोन्मत्तः भूत्वा स्वेच्छया इतस्ततः धाविष्यति'' इति उक्त्वा पुनः शिरसि स्थितान् अङ्गारान् हसन्त्यां स्थापितवान्।

तृतीयः पिशाचः मुखवायुना, हसन्तीं धमन् ''भवतः ग्रामस्य यः बृहत्तटाकः अस्ति, तस्य आधारभागः रात्रौ छिद्रीभूतः भविष्यति। समस्तग्रामे जलं प्रवहति'' इति उक्तवान्।

एवं वदतां पिशाचानां वचनानि शृण्वन् साम्बः भीत्या आश्चर्येण च तान् पश्यन् एव आसीत्, तदा त्रयः अपि पिशाचाः विकट-स्वरेण उच्चैः हसन्तः अगोचराः अभवन्। हसन्ती अपि अदृश्या जाता।

वृष्टिः स्थगिता। साम्बः तस्मात् तिन्त्रिणीवनात् निर्गत्य स्वीयं ग्रामं प्रत्या-गतवान्। प्रातः पाठशालां गच्छतः बालान् वीथ्यां यदा दृष्टवान् तदा शीघ्रं शीघ्रं धावन् पाठशालां प्राप्य तत्र स्थितान् उद्दिश्य ''यथाकथञ्चित् अद्य विरामघोषणं कुर्वन्तु भोः। बालाः इतः प्राधवन्तु'' इति उक्तवान्।

काकतालीयन्यायेन इव तस्मिन् दिने प्रधानाध्यापकस्य किञ्चित् स्वीयं

कार्यान्तरम् आसीत्। अतः सः विरामं दत्त्वा आगतान् सर्वान् बालान् पाठशालातः प्रेषितवान्। सर्वेषां गमनसमनन्तरम् एव सः महान् निम्बवृक्षः उच्चैः शब्दायमानः पाठशालायाः उपरि अपतत्। शालायाः छदिः भित्तयः च चूर्णीभूताः।

तस्मिन् एव क्षणे पिशाचवचनानां वार्तां ग्रामस्थाः सर्वे ज्ञातवन्तः। केचन ग्रामवृद्धाः साम्बस्य समीपम् आगत्य 'पिशाचैः अन्यत् किम् उक्तम्?' इति पृष्टवन्तः।

"सायङ्काले देवालयस्य गजः मत्तः भवति इति, रात्रौ अस्माकं ग्रामस्य बृहत्-तटाकस्य जलं आधारं भित्त्वा ग्रामे प्रवहति इति च पिशाचाः उक्तवन्तः" इति उक्तवान् साम्बः।

तां वार्तां श्रुत्वा सद्यः एव देवालयस्य धर्मकर्तारः तदानीम् एव तं गजं ग्रामस्य बहिर्भागं नीत्वा लोहशृङ्खलाभिः एकस्मिन् वृक्षे दृढं बद्धवन्तः। तथापि यदा देवालये रथोत्सवः आरब्धः, तदा गजः भयङ्कर-शब्देन गर्जनं कुर्वन् शृङ्खलाः छित्त्वा अरण्यं प्रति धावितवान्।

एतादृशदुरन्तनिवारकं साम्बं ग्रामीणाः बहुधा प्रशंसितवन्तः। सः सर्वजनप्रियः अभवत्। तस्यां रात्रौ केचन हस्तेषु अग्नि-दण्डान् ज्वालयन्तः तटाकस्य उपरिभागे रक्षणकार्यमग्नाः स्थितवन्तः। मध्यरात्रे वृष्टेः प्रचुरप्रमाणकं जलं कुल्यानां द्वारा आगतम्। तटाकः पूर्णः। अन्ते एकत्र तटाकः



शिथिलः अभवत्। तदा झटिति तत्र स्थिताः जनाः शिलाखण्डान् मृत्तिकां च तत्र स्थापयित्वा दृढं समीकृतवन्तः।

"पिशाचानां भविष्यवचनं अक्षरशः सत्यं जातं भोः। साम्ब! अद्य रात्रौ तिन्त्रिणीवनं गत्वा, ते पिशाचाः पुनः किं किं वदन्ति इति श्रुत्वा आगच्छतु भोः" इति ग्रामवृद्धाः साम्बं प्रार्थितवन्तः।

परेद्युः यदा अन्धकारः सर्वत्र व्याप्तः, तदा साम्बः पिशाचानां समीपं गतवान्। दूरतः एव तं दृष्ट्वा पिशाचाः "आगच्छतु भोः अम्बापुरवासिन्! अस्माकं भविष्यवचनं यथार्थं जातं खलु?" इति उच्चैः पृष्टवन्तः।

"सर्वं भवद्भिः यथा उक्तं तथा एव प्राचलत् भोः! भवतां वचनानि अद्भुतानि भोः! अद्य रात्रौ किं किं भवतीति प्रष्टुम्



इति उक्त्वा शतं सुवर्णमुद्रिकाः तस्मै दत्त्वा गतवान्।

किञ्चित्कालानन्तरं ग्रामस्य प्रधान-वणिक् साम्बस्य समीपम् आगत्य "मम पत्न्याः पूर्वजाः बहुपूर्वं समुद्रवाणिज्यं कृत्वा कोट्यधीशाः अभवन्। मया अपि समुद्र-वाणिज्यं कारयितुं मम पत्नी बहुदिनेभ्यः आग्रहं कुर्वती अस्ति। एतेन वाणिज्येन मम प्रयोजनं भवति वा न वा इति पिशाचान् पृष्ट्वा आगच्छतु भोः" इति उक्त्वा साम्बस्य हस्ते एकं सुवर्णनाणकम्, एकं रजतनाणकं च दत्त्वा गतवान्।

एवंरीत्या सायङ्कालं यावत् अनेके जनाः आगत्य पिशाचानां द्वारा भविष्यविचारं ज्ञातुं साम्बस्य हस्ते धनं दत्त्वा दत्त्वा गतवन्तः। सः सर्वं गणितवान्। आहृत्य सहस्रंनाणकाणि दृष्ट्वा चकितः जातः सः।

सर्वेषां प्रार्थनाविषयान् एकस्मिन् पत्रे लिखित्वा तत् पत्रं, सम्पादितस्य धनस्य अर्धभागं च एकस्मिन् वस्त्रे ग्रन्थिरूपेण बद्ध्वा, रात्रौ पिशाचानां समीपं गतवान्।

पिशाचाः तं दृष्ट्वा "भोः। अम्बापुर वासिन्, आगच्छतु भोः" इति हसन्तः आहूतवन्तः।

साम्बः सलीलं गत्वा तेषां पार्श्वे उपविश्य "भवन्तः सर्वदा अहितविचारान् एव वदन्ति। इदानीं तथा मास्तु। अद्य शुभविचारान् वदन्ति चेत् भवताम् उपरि सुवर्णवर्षणं भवति" इति उक्त्वा धनस्य ग्रन्थिं प्रदर्शित-

इदानीम् आगतवान् अस्मि" इति उक्तवान् साम्बः।

आगामिन्यां रात्रौ चोराः चौर्यार्थं भूस्वामिनः गृहं प्रविशन्ति इति, ग्रामवृद्धस्य धनञ्जयस्य पुत्र्याः विवाहदिने, पाकगृहे कूष्माण्डव्यञ्जने गृहगोधिका पतिष्यति इति च उक्त्वा पिशाचाः अदृश्याः अभवन्।

साम्बः ग्रामं प्रत्यागत्य तां वार्तां भूस्वामिनं धनञ्जयं च कथितवान्। अपायतः पूर्वमेव जागरूकतायाः अवलम्बनेन अपायाः परिहृताः।

अनन्तरं ग्रामस्य भूस्वामी अश्वशकटम् आरुह्य स्वयम् एव साम्बस्य कुटीरम् आगत्य "अद्य रात्रौ तान् पिशाचान् पृच्छतु यत् कदा मम पुत्रप्राप्तिः भविष्यति इति। भवतः श्रमस्य उचितं प्रतिफलं दास्यामि"

वान्।

सः जातं सर्वं वृत्तन्तं कथयित्वा, ग्रामीणानां प्रार्थनानां पट्टिकां पिशाचानां पुरतः संस्थाप्य "एतेषां सर्वेषां प्रश्नानाम् उत्तराणि कथयित्वा एतानि पञ्चशतं नाणकानि स्वीकुर्वन्तु। अहम् अपि पञ्चशतं स्वीकृतवान्। एकस्मिन् दिने एतावत् धनं सम्पादितम्। इतःपरं महता श्रमेण शाकानाम् उत्पादनं, भारम् ऊढ्वा स्थानात् स्थानम् अटनं इत्यादिकं सर्वं परित्यज्य सुखं जीवितुम् इच्छामि। एतत् सर्वं भवतां कृपाफलम्!" इति उक्तवान्।

तस्य वचनानि शृण्वतां पिशाचानां नेत्राणि अङ्गारसदृशानि जातानि। ते प्रार्थनापट्टिकां धनस्य ग्रन्थिं च अग्नौ क्षिप्त्वा "रे मूर्ख! इतःपरं कदापि अत्र न आगच्छतु। आगच्छति चेत् अपि अस्मान् द्रष्टुं न शक्नोति" इति उक्त्वा अदृश्याः अभवन्।

एतां घटनां दृष्ट्वा चकितः साम्बः, कयाचित् शलाकया हसन्त्याः भस्म परीक्षितवान्। तत्र किमपि न दृष्टम्। प्रातः ग्रामीणानां धनं प्रत्यर्पणीयम् आसीत्। किङ्कर्तव्यतामूढः सः दुःखितः अभवत्।

प्रातः तेनैव मार्गेण आगतः कश्चित् वृद्धपथिकः साम्बं दृष्ट्वा "किं भोः, किमर्थं चिन्तामग्नः अस्ति?" इति पृष्टवान्। साम्बः जातं सर्वं वृत्तान्तं तं कथितवान्।

"सत्यम्। तेषां पिशाचानां वचनं यथार्थम् एव अस्ति। भवान् निश्चयेन मूर्खः एव। पिशाचानां धनं किमर्थम्? पूर्वं कृतानां दुष्टकार्याणां प्रायश्चित्तरूपेण ते पिशाचाः कानिचन उत्तमकार्याणि कुर्वन्ति। तदर्थम् एव भविष्यत्कालीनान् अपायान् पूर्वमेव सूचयित्वा भवतां ग्रामं ते रक्षितवन्तः। तेषां सत्कार्यापेक्षां भवान् वाणिज्यरूपेण परिवर्तयितुं प्रयतितवान्। तेन कारणेन क्रुद्धाः ते अगोचराः अभवन्" इति उक्तवान्।

तद्वचनं श्रुत्वा साम्बः स्वीयं दोषं ज्ञातवान्। 'पञ्चषमासपर्यन्तम् इतः अपि अधिकश्रमेण कार्यं कृत्वा ग्रामीणानां धनं प्रत्यर्पयितुं शक्यते' इति आत्मविश्वासं प्राप्य गृहं प्रति प्रस्थितवान्।





# प्रमुखसेनाधिकारी

गजपुरस्य प्रख्यातसेनानायकः वीरमल्लः अकस्मात् वीरस्वर्गं प्राप्तवान्। अतः तस्य देशस्य शासकः इन्द्रसेनः अतीव व्यथितः। यावच्छीघ्रं इन्द्रसेनेन तस्मिन् स्थाने योग्यः सेनापतिः नियोजनीयः आसीत्। तदर्थं त्रयः अर्हाः आसन् सैन्ये। एकः विक्रमः। अपरः अजयः। तृतीयः शूरसेनः। एतेषु त्रिषु सेनानायकस्थानार्थं कः योग्य इति महाराजस्य गम्भीरं चिन्तनम् आरब्धम्। यतः त्रयः अपि समानाः दृश्यन्ते स्म तस्य दृष्ट्या।

सेनापतिस्थानस्य अधिककालं रिक्तं स्थापनम् अनुचितम् एव किल? किन्तु अत्र त्वरायाः अपि न अवकाशः। यः सेनापतिस्थानम् अलङ्करोति सः वीरः कुशलः देशभक्तः च भवेत्।

एवं स्थिते इन्दुपुरस्य सर्वसेनाधिपतिः गजपुरस्य राजानम् इन्द्रसेनं द्रष्टुम् आगतवान्। इन्दुपुरस्य गजपुरस्य च मध्ये गाढमैत्री आसीत्। तयोः राज्ययोः पार्श्वतनस्य राज्यस्य राजा युद्धोन्मुखः अस्ति इति ज्ञात्वा इन्दुपुरस्य राजा पूर्वचिन्तनार्थं स्वसेनापतिम् अमरम् इन्द्रसेनसमीपं प्रेषितवान् आसीत्। यतः इन्द्रसेनः एतं विषयं न जानाति।

शत्रुराजः रहसि युद्धप्रयत्नं कुर्वन् अस्ति इति अमरः इन्द्रसेनं निवेदितवान्। उक्तवान् च - "एषा वार्ता विश्वासार्हाणां समर्थानां गूढचाराणां द्वारा ज्ञाता। अस्माभिः जागरूकतया भवितव्यम् इति महाराजस्य अभिप्रायः। अस्मिन् क्लिष्टसमये भवतः चतुरः सेनापतिः वीरमल्लः दिवङ्गतः इति तु दौर्भाग्यस्य विषयः एव" इति।

"तत् सत्यम्। तस्मिन् स्थाने अन्यः समर्थः सद्यः एव नियोजिनीयः" इति इन्द्रसेनः त्रयाणाम् समानतायाः विषये स्वाभिप्रायं निवेदितवान्, पृष्टवान् च। -

"भवान् एव कमपि उपायं सूचयतु। एतेषु त्रिषु एकः नियोजनीयः, तत् कथम्?" इति।

अमरः महाराजस्य निवेदनम् अङ्गीकृत्य "श्वः एतेषां त्रयाणाम् अपि परीक्षां करिष्यामि इति उक्तवान्।

परेद्युः इन्द्रसेनराजः अमरः च एकस्मिन् प्रकोष्ठे उपविष्टौ आस्ताम्। प्रथमतया शूरसेनः आहूतः।

तस्य आगमनानन्तरं अमरः पृष्टवान् - "अस्माकं सीमाप्रान्तस्थाः केचन राजानः अस्माकम् उपरि युद्धोन्मुखाः सन्ति इति ज्ञातम्। तेषां सैन्यबलं कियत् इति भवान् जानाति वा?" इति।

तत्क्षणमेव शूरसेनः तेषां राज्ञाम् गजाश्वबलसङ्ख्यां सैनिकानाम् आयुधानां च विवरणं उक्तवान्।

तत् श्रुत्वा अमरः "समीचीनम्, तर्हि भवतः गजपुरस्य सैन्यबलं कियत्?" इति प्रश्नं कृतवान्।

शूरसेनः स्वराज्यस्य सैन्यबलविवरणम् उक्त्वा सीमाप्रन्ते कियत् सैन्यबलम् अस्ति इत्यपि च उक्तवान्।

अमरः तं सम्प्रेष्य अजयम् आनायितवान्। शूरसेनं प्रति यः प्रश्नः पृष्टः आसीत् तं एव प्रश्नं एतम् अपि पृष्टवान्।

अजयः अपि शूरसेनः इव तत्क्षणे एव पार्श्वराज्यस्य सैन्यबलं स्वराज्यस्य सैन्य-



बलं च सविवरणम् उक्तवान्। सामान्यतः तयोः द्वयोः अपि उत्तरं समानम् आसीत्।

तदनन्तरं विक्रमः आगतः। तम् अपि पूर्वतनमेव प्रश्नं पृष्टवान् अमरः।

किन्तु विक्रमः पार्श्वराज्यस्य सैन्यबल-विषये समीचीनतया विवरणम् उक्त्वा "स्वराज्यस्य सैन्यबलं कियत् इति अहं न जानामि" इति उक्तवान्।

विक्रमस्य निर्गमनानन्तरम् अमरः इन्द्र-सेनराजं दृष्ट्वा - "महाराज, भवतः सेनापतिस्थानार्थम् एषः विक्रमः एव योग्यः। तम् एव सेनापतिस्थाने नियोजयतु" इति उक्तवान्।

एतत् श्रुत्वा राजा आश्चर्येण "यः स्वराज्यस्य एव सैन्यबलं न जानाति सः सेनापतिः भवतु इति वदति किल?" इति पृष्टवान्।

"महाराज, स्वराज्यस्य सैन्यबलं विक्रमः सम्यक् जानाति एव। किमर्थं मम पुरतः तं विषयं सः न उक्तवान् इति मम निर्गमनानन्तरं यदि भवान् तं पृच्छति तर्हि ज्ञातुं शक्नोति" इति उक्तवान् अमरः।

अमरस्य निर्गमनानन्तरं इन्द्रसेनराजः विक्रमम् आहूय "अस्माकं राज्यस्य सैन्यबलं भवान् नैव जानाति वा?" इति पृष्टवान्।

विक्रमः विनयपूर्वकं उक्तवान् - "महाप्रभो, यद्यपि अस्माकं देशः, इन्दुदेशः च वर्तमानकाले मित्रदेशौ। तथापि भविष्यत्काले कीदृशं परिवर्तनं भवेत् इति न जानीमः किल? अतः अन्यदेशस्य सेनापतेः पुरतः अस्माकं सैन्यबलं कियत् इति कथनं तावत् न उचितम् इति मम अभिप्रायः। अतः एव न जानामि इत्युक्तवान्" इति।

तस्य उत्तरेण इन्द्रसेनः तृप्तः। तद्दिने एव इन्द्रसेनराजः विक्रमं सेनापतिस्थाने नियोजितवान्।





# बुद्धिमती

कस्मिंश्चित् ग्रामे कश्चन कृषीवलः आसीत्। तस्य एकः एव पुत्रः। कृषिकः स्वपुत्रं महत्या प्रीत्या पोषितवान्। 'एवं पोषणेन पुत्रः समर्थः भविष्यति' इति तस्य भावना। किन्तु यदा पुत्रः प्रौढः जातः तदा कृषिकस्य भ्रमनिरसनं जातम्। यतः तदीयः पुत्रः इदानीम् 'अहम् एव महाबुद्धिमान्' इति गर्वेण व्यवहरति। एतेन कारणेन क्रमशः पुत्रस्य बुद्धिमत्ताविषये कृषिकस्य विश्वासः न्यूनः जातः।

एकदा कृषिकः पुत्रम् उक्तवान् - "भोः इदानीं भवान् विंशतिवर्षीयः। किन्तु एतेन किं वा प्रयोजनम्? भवान् सर्वथा मन्दबुद्धिः सञ्जातः अस्ति। भवान् जीवने किं वा साधयेत् इति अहं तु न जानामि" इति।

"किमर्थम् एवं वदति? अहं किं बुद्धिमान् न वा? मम बुद्धिमत्तां प्रमाणीकर्तुं मया किं करणीयम् इति प्रथमं वदतु। तदनन्तरं भवतु आक्षेपः" इति उक्तवान् पुत्रः।

"अस्माकं गृहे किञ्चित् अजचर्म अस्ति। एतत् स्वीकृत्य विपणिं गत्वा विक्रीय आगच्छतु। तदा पश्यामि भवतः बुद्धिमत्ताम्" इति उक्तवान् कृषीवलः।

"तावदेव किल? चर्मणः विक्रयणं कृत्वा धनम् आनेतव्यं किल?" इति पृष्टवान् पुत्रः।

"केवलं चर्मणः विक्रयणं कृत्वा धनम् आनयति चेत् किं तत्र बुद्धिमत्तायाः पात्रम्? यदि निश्चयेन भवान् बुद्धिमान् स्यात् तर्हि भवता चर्ममूल्यकं धनम् आनेतव्यम्, तथैव चर्म अपि प्रत्यानेतव्यम्। तत् कथम् इति उपायं चिन्तयतु। धनं चर्म च प्रत्यानीय प्रदर्शयतु भवतः बुद्धिमत्ताम्" इति उक्तवान् कृषीवलः।

पुत्रः तु गर्वेण एव उक्तवान् - "अस्तु, तथैव आनेष्यामि। श्वः सायङ्कालतः पूर्वं चर्ममूल्यकं धनं चर्म च आनेष्यामि एव।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



पश्यतु तावत्" इति।

अनन्तरदिने प्रातः एव कृषीवलस्य पुत्रः शीघ्रम् उत्थाय अजस्य चर्म स्वीकृत्य विपणिं प्रति प्रस्थितः। यदा सः विपणिं प्राप्तवान् तदा एकः आगत्य - "अजस्य चर्म विक्रयणार्थं किल? कियत् मूल्यम् एतस्य?" इति पृष्टवान्।

"केवलं मूल्यज्ञानेन किं भवतः? एतस्य मूल्यं दत्त्वा चर्म अपि प्रत्यर्पयितुं सिद्धः वा भवान्? तथा सिद्धः चेत् वदतु। मूल्यं वदामि" इति उक्तवान् कृषीवलः पुत्रः।

ग्राहकः एतस्य उत्तरं श्रुत्वा - "समीचीनः उपायः। एतावत्पर्यन्तम् एतादृशः उपायः कस्यापि मनसि न स्फुरितः आसीत्। बालक! बहु समीचीनम्। कांश्चन जनान् इतोऽपि पृच्छतु। तदा कोऽपि महानुभावः लभ्येत, यश्च चर्म अस्वीकृत्य तन्मूल्यकं धनं दद्यात्" इति परिहासपूर्वकम् उक्त्वा गतवान्।

विपण्याम् अनेके जनाः चर्मणः मूल्यं पृष्टवन्तः। कृषीवलपुत्रः तु - "चर्मणः मूल्यं दातव्यं, चर्म अपि प्रत्यर्पणीयम्" इति सर्वान् उक्तवान्। तदा सर्वेऽपि उपहासदृष्ट्या तं दृष्ट्वा चर्म अस्वीकृत्य एव गतवन्तः।

मध्याह्नः अतीतः। समयः गच्छति स्म। तदानीमपि कृषीवलपुत्रः चर्मबन्धं स्वीकृत्य अटति स्म। अटनकारणेन पादवेदना आरब्धा आसीत्।

एकत्र जनाः समूहरूपेण स्थित्वा किमपि दृष्ट्वा सन्तोषेण कोलाहलं कुर्वन्तः आसन्। कृषीवलपुत्रः तत्र गतवान्।

तत्र समूहमध्ये जनरञ्जकनामकः इन्द्रजालं प्रदर्शयन् आसीत्। सः कृषीवलपुत्रं दृष्ट्वा "बालक, तत् चर्मबन्धं ददातु, समीचीनं विनोदं प्रदर्शयामि अहं जनरञ्जकः" इति उक्तवान्।

कृषीवलपुत्रः स्वकीयं चर्मबन्धं जनरञ्जकनामकाय दत्तवान्। सः जनरञ्जकः तं चर्मबन्धं भूमौ स्थापयित्वा तस्य उपरि स्वकीयं वस्त्रम् आच्छाद्य "सर्वेऽपि करताडनं कुर्वन्तु" इति उक्तवान्।

करताडनशब्दः यदा स्थगितः, तदा

जनरञ्जकः आच्छादितं वस्त्रं निष्कासितवान्। तत्र चर्मबन्धः न दृष्टः। तस्मिन् स्थाने एकम् आम्रसस्यम् आसीत्। तत्र एकम् आम्रफलम् अपि आसीत्।

पुनरपि सर्वे यदा करताडनम् आरब्धवन्तः तदा कृषीवलपुत्रः आश्चर्यचकितः। यतः यदा सः स्वकीयं चर्म प्रष्टुम् अग्रे गतवान् तदा जनरञ्जकः कुत्रापि अदृश्यः अभवत्।

कृषीवलपुत्रः रोदनम् एव आरब्धवान्। आगताः जनाः सर्वे गतवन्तः। कृषीवलपुत्रः मूल्यसहितं चर्म आनयामि इति गर्वेण उक्त्वा आगतवान् आसीत्। चर्मणः मूल्यं किम्, मूलभूतं चर्म एव अदृश्यम् जातम् आसीत्। रिक्तहस्तेन गृहं गच्छति चेत् बुद्धिहीनता स्वयं सिध्यति स्म।

एतेन सङ्कटेन सह बुभुक्षा अपि तं बाधते स्म। 'तस्मिन् सस्ये विद्यमानम् आम्रफलं वा खादामि' इति कृषिकपुत्रः गत्वा तत् फलं गृहीतवान्। तदा आम्रसस्यम् अदृश्यम् अभवत्, तत्र चर्मबन्धः दृष्टः।

न्यूनातिन्यूनं चर्म वा लब्धम् इति सन्तोषेण तत् गृहीत्वा। कृषिकपुत्रः पित्रा करिष्यमाणं दण्डनं स्मरन् गृहं प्रति प्रस्थितः।

सूर्यास्तसमयः आसीत्। मार्गः निर्जनः आसीत्। किञ्चिद्दूरं यदा गतवान्, तदा पृष्ठभागतः कश्चित् 'बालक' इति आह्वयन् आसीत्। एषः परिवृत्त्य दृष्टवान्।



जनरञ्जकः एतस्य अभिमुखम् एव आगच्छन् आसीत्।

जनरञ्जकः कृषीवलपुत्रसमीपम् आगत्य उक्तवान् - "भवान् महान् बुद्धिमान्। अहं एकम् उपायं वदामि, स्मरतु" इति।

"सः उपायः कः?" इति पृष्टवान् कृषीवलपुत्रः। तदा जनरञ्जकः उक्तवान् - "मार्गे बालिकाः मिलन्ति चेत् जागरूकया कुशलवार्तां पृच्छतु, तावदेव" इति।

एवम् उक्त्वा जनरञ्जकः गतवान्। कृषीवलपुत्रः किञ्चिद्दूरं यदा गतवान् तदा एका कुल्या दृष्टा। किञ्चिद्दूरे एकं गृहम् अपि दृष्टम्।

तस्मात् गृहात् षोडशवर्षवयस्का काचित्

बालिका घटं गृहीत्वा कुल्याम् आगतवती, जलं पूरितवती च। कृषीवलपुत्रः जन-रञ्जकस्य वचनं स्मरन्, तां दृष्ट्वा मन्दहासेन "किं भोः? कुशलं वा?" इति पृष्टवान्। "कुशलम्। भवन्तः सर्वे कुशलिनः वा?" इति पृष्टवती सा।

"एवम् अस्मि, बुभुक्षायाः पीडां विना अन्यत् सर्वं कुशलम् एव" इति उक्तवान् कृषीवलपुत्रः। "तर्हि गृहम् आगच्छतु" इति उक्तवती बालिका। तं गृहं नीत्वा खादितुं रोटिकाः दत्तवती, अजचर्मविषयं पृष्टवती च।

"एतस्य विक्रयणं कृत्वा एतन्मूल्यकं धनं चर्म च आनेतव्यम् इति मम पिता उक्तवान् अस्ति। तादृशः ग्राहकः कोऽपि न मिलितवान्। सा एव चिन्ता मम" इति उक्तवान् कृषिकपुत्रः।

"तावदेव किल! अहं भवते चर्म तन्मूल्यकं धनं च ददामि। किञ्चित्कालं तिष्ठतु" इति सा चर्मबन्धं स्वीकृत्य अन्तः गतवती। चर्मणः रोमाणि सर्वाणि कर्तयित्वा चर्म रोम्णां मूल्यं च आनीय दत्तवती। "भवतः इष्टं सिद्धं किल?" इति पृष्टवती च।

कृषीवलपुत्रः महता सन्तोषेण तस्याः अनुमतिं प्राप्य स्वगृहं गतवान्। पुत्रेण आनीतं चर्म धनं च दृष्ट्वा कृषीवलः सन्तोषेण "एषः उपायः केन उक्तः?" इति पृष्टवान्।

"पुरुषः न भोः, सा एका बालिका। न उक्तवती अपि तु व्यवहारेण प्रदर्शितवती" इति प्रवृत्तं वृत्तान्तं निवेदितवान् कृषिकपुत्रः।

"ईदृशी वा भवतः बुद्धिः? तादृशीं बालिकां दृष्ट्वा अपि तूष्णीम् आगतवान्! परिणीय आनेतुं न शक्यम् आसीत् वा? एतदर्थमेव भवान् बुद्धिहीनः इति अहं सर्वदा वदामि" इति उक्तवान् कृषीवलः।

अनन्तरं तौ उभौ अपि तां बालिकां द्रष्टुं गतवन्तौ। प्रथमं तस्याः अभिप्रायं पृष्ट-वन्तौ। अनन्तरं कृषिकपुत्रस्य बालिकायाः च विवाहः सवैभवं सम्पन्नः।



# पक्षिण: पशव: च-

अमेरिकादेशीया नाविकसंशोधनसंस्था १९७६ तमे संवत्सरे एकं विचित्रं षार्क मीनम् अगृह्णात्। अस्य मीनस्य मुखे सूच्याकारकानां दन्तानां सप्तपङ्क्तय: आसन्। ४-४२ मीटर् दैर्घ्यं, ७४८ कि.ग्रां भार: च आसीत् तस्य मीनस्य। अत: एव एतं मीनं मेगामौत्षार्क् (विशालमुखयुत: मीन:) इति नाम्ना आहूतवन्त:।



## मेगा मौत् षार्क्



## उलूकस्य कर्णौ

उलूकेषु केषाञ्चित् शिरसि कर्णाकारकं किञ्चित् दृश्यते। वस्तुत: एष: भाग: न कर्ण:, अपि तु पिच्छम्। वास्तविकौ कर्णौ तु शिरस: उभयपार्श्वे पिच्छानाम् अन्त:च गूढतया तिष्ठत:।

प्रपञ्चे एव अतिलघु: जतुक: थायलेण्ड्देशे अस्ति। एतस्य पक्ष: १८० मिलिमीटर् दैर्घ्यक:। शरीरं च ३.३ मिलिमीटर् दैर्घ्यकं भवति।



## लघु: जतुक:

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्गारः - Live Coal
अटनम् - Wandering
अवकरः - Garbage
आघ्राणनम् - To smell
उदरोपपीडम् - Laughed to his hearts content
उद्यापनम् - Finishing
उपधानम् - Pillow
उलूकः - Owl
एकलः - Alone
कूपिकाः - Bottle
कूष्माण्डः - Pumpkin
गृहगोधिका - Lizard
चण्डी - Obstinate Woman
छदिः - Roof of a house
जालम् - Net
तटाकः - Pond
तिन्त्रिणी - Tamarind
दष्ट्वा - Having bitten
धमन् - Blowing
निम्बवृक्षः - Neem tree
पराकाष्ठा - Extremity
पाञ्चालिका - Doll
प्रतिवादी - Opponent
बुद्धिमत्ता - Talent
मधुमक्षिका - Honey-bee
यन्त्रागारः - Factory
युगः - Yoke
रोम - Hair
ललाटः - Forehead
विरामः - Holiday
व्यञ्जनम् - Curry
व्यामोहः - Infatuation
शलाका - A small stick
शिबिका - Palanquin
सिद्धहस्तः - Expert
सीवनम् - To stitch
सूकरः - Pig
हसन्ती - A fire-grase

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां अक्टोबर्-८६ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा आगस्ट्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

**'जून्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—**

प्रथमचित्रम् - **श्रमे शक्तिः।**

द्वितीयचित्रम् - **पुष्पे भक्तिः।**

प्रेषकः— श्री कृष्णनारायण पाण्डेय, समन्वयकुटीरम्, ई. १०५२, राजाजीपरम्, लखनऊ-२२६०१८.

---

# भवन्तः जानन्ति वा? (उत्तराणि)

१. सिरिया राजधानी डमास्कस्। २. सेण्ट् पीटर्स् बर्ग्। ३. क्रिष्टियानिया। ४. मेल्बोर्न्। ५. अल्-खहि राह्।

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# वस्त्रं सीवनीयम् अस्ति

| | |
|---|---|
| ग्राहकः - एतस्मै बालकाय समवस्त्रं सीवनीयम् अस्ति। | This boy needs his school Uniforms. |
| सौचिकः - बाल, अत्र आगच्छतु। सम्यक् तिष्ठतु। युतके कति कोषाः अपेक्षिताः? | Come here my boy, stand straight. How many pockets do you need on your shirt? |
| ग्रा - एकः कोषः पर्याप्तः। अर्धोरुकस्य पुरतः कोषद्वयं, पृष्टतः एकम्। | One will do, but need two on the knickers. Two in front and one at the back. |
| सौ - युतकं पूर्णबाहुकं तु न किल? | You need full sleeves? |
| ग्रा - न न, एतत् समवस्त्रार्थम्। अतः अर्धबाहुकम् एव अपेक्षितम्। | No, it is school uniform. Only half sleeves will do. |
| सौ - अस्तु, अत्र बालकस्य नाम लिखतु। | Okay, Please write the boy's name here. |
| ग्रा - वस्त्राणि कदा सिद्धानि भवेयुः? | When will they get ready? |
| सौ - इदानीं शालारम्भस्य समयः किल। अतः कार्यबाहुल्यम्। सप्ताहानन्तरं दत्तं चेत् पर्याप्तं वा? | All schools have re-opened. There are many orders. Can I give you after a week? |
| ग्रा - न, विलम्बः भविष्यति। अद्य सोमवासरः खलु। गुरुवासरे ददातु। | No, it would be late! Today is Monday. Please give them on Thursday. |
| सौ - गुरुवासरे वा! प्रयत्नं करिष्यामि। तद्दिने सायङ्काले आगच्छतु। | On Thursday! I'll try. Make it Thursday evening. |
| ग्रा - परह्यः समीकरणार्थं ऊरुकं पादांशुकं च दत्तम् आसीत्। तत् द्वयं सिद्धं वा? | I gave pair of trousers and pyjamas for re-stitching the day before. Are they ready now? |
| सौ - क्षाम्यतु भोः। कार्यबाहुल्ये आगते एव कर्मकराणाम् अनुपस्थितिः! एकः अस्वस्थः। अन्यः दिनत्रयस्य विरामं स्वीकृत्य गतवान्। अतः समीकरणं न सम्पन्नम्। श्वः प्रातः दास्यामि। | Sorry sir. We tried our best, but could not finish them. Some of the assistants are absent. One is sick and another is on leave for three days. That is it. I'll give them to you tomorrow morning. |
| ग्रा - भवान् सर्वदा एवम् एव वदति। समये कदापि न ददाति। | You say the same thing every time! Never give any thing on time! |
| सौ - चिन्तां न करोतु, श्वः प्रातः निश्चयेन दास्यामि। | Don't worry, I'll give you tomorrow. |



खेल खिलौने कॉमिक्स बोर
रवि को चाहिए कुछ और
खुद ही सोचे, खुद ही बनाए
जिससे तबियत खुश हो जाए
एको पेन सेट उसने उठाया,
घर के ऊपर मोर बनाया,
डैडी की मूंछें, एक शिकारी
एक कबूतर, एक भिखारी.
एको हरे और एको पीले
लाल और ऑरेंज, भूरे, नीले
काले, बैंगनी, वायलेट, गुलाबी
अब तो स्केच पेन एको ही लें.

# एको
## स्केच पेन रंगों से यारी, मौज-मस्ती तुम्हारी!

प्रिसिज़न राइटिंग पॉइन्ट्स प्रा. लि. १८, सुभाष रोड, विले पारले (पूर्व), बम्बई-४०० ०५७.
फोन : ६०४०३०५, ६०४३५५६.

